ध्यायं व्याख्यास्यामः । इति हस्माहुरात्रेयादयो महर्षयः ॥

सर्वकुष्ठानां समान्येन हेतुमाह मिथ्याहारेत्यादिना ॥

मिथ्याहारविहारेण विशेषेण विरोधिना ।
साधुनिन्दावधान्यस्वहरणाद्यैश्च सेवितैः ॥
पाप्माभिः कर्मभिः सद्यः प्राक्तनैर्वेरिता मलाः
सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम्॥
दूषयन्तः श्लथीकृत्य निश्चरन्तस्ततो बहिः ।
त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत्॥
कालेनापेक्षितं यस्मात् सर्वं कुष्णाति तद्वपुः ।

मिथ्याहारादिना तथा साधुनिन्दावधादिभिर्नानाविधैः पाप्मभिः कर्मभिः सद्यःकृतैः प्राक्तनैर्जन्मान्तरकृतैर्वा मला दुष्टास्त्वचो वैवर्ण्यं यत् कुर्वन्ति तत् कुष्ठमुशन्ति मुनय इति शेषः । सिराः प्रपद्येत्यादिना संप्राप्तिः । कालेनेत्यादिना कुष्ठशब्दस्यार्थ. ॥

प्रपद्य धातून्व्याप्यान्तःसर्वानसंक्लेद्य चावहेत्॥
सस्वेदक्लेदसंकोथानकृमीनसूक्ष्मानसुदारुणान।
लोमत्वक्स्नायुधमनीतरुणास्थीनि यैः क्रमात्
भक्षयेत् श्वित्रमस्माच कुष्ठबाह्यमुदाहृतम् ।

प्रपद्येत्यादौ कालेनोपेक्षितमित्यनुवर्तते । तत् कुष्ठं धातून् प्रपद्य तांश्च संक्लेद्य कृमीनावहेच्छरीरे । यैः कृमिभिः करणभूतैर्लोमादीनि क्रमात् कुष्ठं भक्षयेत् तरुणास्थीनि कर्णनासादिगतानीह यान्युक्तानि । अस्मात् कारणात् श्वित्रं बाह्यकुष्ठशब्देनोच्यते। क्लेदकृम्याद्यभावात् सत्यपि त्वग्गतत्व इत्यर्थः । सुबोधम् ॥

कुष्ठानि सप्तधा दोषैः पृथङ्मिश्रैः समागतैः ॥

पृथग्दोषैः त्रीणि । संसर्गेण च त्रीणि । सन्निपातेनैकमिति सप्तविधानि कुष्ठानि ॥

नन्वेवं सत्येकदोषजं द्विदोषजं च कुष्ठं न सर्वं त्रिदोषजं स्यादित्यत आह सर्वेष्वपीत्यादि ॥

सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ।

सर्वेष्वपि कुष्ठेषु सन्निपातजेष्वधिकत्वेन व्यपदेशः । सन्निपातस्य समविषमात्मकत्वात् ॥

वातेन कुष्ठं कापालं पित्तादौदुम्बरं कफात् ॥
मण्डलाख्यं विचर्चीचऋश्याख्यं वातपित्तजम्।
चर्मैककुष्ठकिटिभसिध्मालसविपादिकाः ॥
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी ।
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥
सर्वैः स्यात् काकणं पूर्वं त्रिकं दद्रु सकाकणम्
पुण्डरीकऋश्यजिह्वे च महाकुष्ठानि सप्त तु ॥

वातेनेत्यादिना सप्तविधस्य कुष्ठस्य नामान्युच्यन्ते । यान्याश्रित्य लक्षणं विधीयते । वातादेकं पित्तादेकं द्वे कफात् ।

एकं वातपित्तात् । षड्वातकफात् । षट् कफपित्तात् । एकं सन्निपातादेवमेतान्यष्टादश कुष्ठानि । एषां मध्ये कापालौदुम्बरमण्डलदद्रुकाकणपुण्डरीकर्श्यजिह्वानि सप्त महाकुष्ठान्युच्यन्ते ॥

अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिःश्रमः
व्रणानामाधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोथनम्
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।

अतिश्लक्ष्णेत्यादिना सर्वकुष्ठपूर्वरूपम् । अस्वेदोऽत्यन्तं स्वेदाभावः । कोठा उत्सन्नानि मण्डलानि । व्रणानां भिन्नस्फोटभवानां कोथनम् । रूढानामपि व्रणानां पुनः ॥

कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥
विस्तृतासमपर्यन्तं हृषितैर्लोमभिश्चितम् ।
तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च ॥

अथ क्रमेणाष्टादशानां कुष्ठानां लक्षणमुच्यते कृष्णारुणेत्यादिना । कपालो घटकर्परः । सुप्तमचेतनम् । विस्तृतानि विस्तीर्णानि असमानि ह्रस्वदीर्घाणि पर्यन्तानि यस्य तत्तथोक्तम् । शीघ्रसर्पि च क्षिप्रव्यापीति कापालम् ॥

पक्वोदुम्बरताम्रत्वग्रोमगौरसिराचितम् ।
बहळं बहुलक्लेदं रक्तं दाहरुजाकरम् ॥
आशूत्थानावदरणक्रिमि विद्यादुदुम्बरम् ।

पक्वोदुम्बरफलवत्ताम्राणि त्वग्लोमानि च यस्य तत्तथोक्तम् । बहळं घनम् । आशूत्थानादीनि यस्य तदेवम् । अवदरणं कोथनम् ॥

स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम्।
अन्योन्यासक्तमुत्सन्नं बहुकण्डूस्रुतिक्रिमि ॥
श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम् ।
सकण्डूपिटका श्यावा लसीकाढ्या विचर्चिका

स्थिरत्वादियुतं मण्डलं विद्यादिति संबन्धः । बहुकण्ड्वादिकं यत्र तत्तथोक्तम् । परिमण्डलं वर्तुळम् । सकण्ड्वित्यादिना विचर्चिका । लसीका जलप्रायः ॥

परुषं तनुरक्तान्तमन्तः श्यावं समुन्नतम् ।
सतोददाहरुक्क्लेदं कर्कशैः पिटकैश्चितम् ॥
ऋश्यजिह्वाकृति प्रोक्तमृश्यजिह्वं बहुक्रिमि ।
हस्तिचर्मखरस्पर्शं चर्मैकाख्यं महाश्रयम् ॥
अस्वेदं मत्स्यशकलसंभिन्नं किटिभं पुनः ।
रूक्षं किणखरस्पर्शं कण्डूमत् परुषासितम् ॥

परुषमित्यादिना ऋश्यजिह्वम् । ऋश्यजिह्वा रोहितजिह्वा । हस्तिचर्मेत्यादिना चर्म । एकाख्यमित्यादिना एकाख्यम् । महाश्रयं गम्भीरमूलम् । मत्स्यशकलसन्निभान्तं च । किटिभमित्यादिना किटिभम् । किणमङ्गे घर्षणात् ग्रन्थिस्तद्वत् खरस्पर्शम ॥

सिध्मरूक्षं बहिःस्निग्धमन्तर्घृष्टं रजः किरेत् ।
श्लक्ष्णस्पर्शं तनुश्वेतताम्रं दौग्धिकपुष्पवत् ॥
प्रायेण चोर्ध्वकाये स्याद्गण्डैः कण्डूयुतैश्चितम्
रक्तैरलसकं पाणिपाददार्यो विपादिकाः ॥

तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटकाचिताः ।

रूक्षमित्यादिना सिध्म । गण्डैः कण्डूयुतैश्चितमित्येवमन्तलक्षणम् । अलसकं रक्तैर्गण्डैर्भवति । पाणिपाददरणादि विपादिकालक्षणम् ।

दद्रुलिङ्गमाह ॥

दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः ॥
उत्सन्नमण्डला दद्रुः कण्डूमत्यनुषङ्गिणी ।
स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम् ॥
शतारुःक्लेदजन्त्वाढ्यं प्रायशः पर्वजन्म च ।
रक्तान्तमन्तरापाण्डुकण्डूदाहरुजान्वितम् ॥
सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः ।
घनभूरिलसीकासृक्प्रायमाशु विभेदि च ॥
पुण्डरीकम्—

दीर्घप्रताना दूर्वावत् शाड्वलकाण्डवत् । उत्सन्नं मण्डलं यस्याः । अनुषङ्गिणी बहुकालस्था । शतारुःस्थूलमूलत्वादिलिङ्गम् । जन्तवः क्रिमयः । पर्वाण्यस्थिसन्धीनि । रक्तान्तादि पुण्डरीकलक्षणम् । अन्तर्मध्ये आपाण्डुः । अंशवो रजांसि तैराचितम् ॥

—तनुत्वग्भिश्चितं स्फोटैः सितारुणैः ।
विस्फोटं पिटकाः पामाकण्डूक्लेदरुजाधिकाः ॥
सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्पाणिकूर्परे ।
सस्फोटमस्पर्शसहं कण्डूषातोददाहवत् ॥
रक्तं दलच्चर्मदलं काकणं तीव्रदाहरुक् ।
पूर्वं रक्तं च कृष्णं च काकनन्दीफलोपमम् ॥
कुष्ठलिङ्गैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ।

तनुत्वग्भिरित्यादि विस्फोटलक्षणम् । विस्फोटास्तनुत्वचः । पिटका इत्यादि पामालक्षणम् । कण्वाद्यन्विताः पिटकाः पामा इत्युच्यन्ते । तच्च पामाख्यं स्फिगादौ प्रायो भवति । सस्फोटमित्यादिना चर्मदलम् । तीव्रदाहयुतत्वादि काकणलक्षणम् । काकनन्दी गुञ्जा । तत्फलमर्धे कृष्णमर्धे रक्तं भवति । तच्च सर्वदोषजत्वात् सर्वलिङ्गमनेकवर्णं च भवेदिति ॥

दोषभेदीयविहितैरादिशेल्लिङ्गकर्मभिः ॥
कुष्ठेषु दोषोल्बणतां सर्वदोषोल्बणं त्यजेत् ।
रिष्टोक्तं यच्च यच्चास्थिमज्जशुक्रसमाश्रयम् ॥
याप्यं मेदोगतं कृच्छ्रं पित्तद्वन्द्वास्रमांसगम् ।
अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत् ॥

एतेषु च कापालाद्येषु कुष्ठेषु प्रत्येकं वाताद्यन्यतमदोषोल्बणतां दोषभेदीयविहितैर्वातादीनां लिङ्गैः कर्मभिश्चादिशेत् । अस्मिन् कुष्ठविशेष इयान् दोषकोप इति दोषाणां लिङ्गकर्मभिः संसव्यासादिभिः परिपूर्णापरिपूर्णैरध्यवस्येत् । तत्र यस्मिन् सर्वे एवोल्बणास्तं त्यजेत् । रिष्टोक्तं कुष्ठं विशीर्यमाणाङ्गमित्यादिना यत्तच्च अस्थ्याद्याश्रयं यत्तच्च त्यजेत् । अस्थ्याद्याश्रयस्यात्रैव लक्षणं वक्ष्यत इत्येतत्सर्वमसाध्यम् । मेदोगतं याप्यम् । पित्तादिविशिष्टं कृच्छ्रम् । कफवातजमकृच्छ्रं सुखमित्यर्थः । तथा त्वगाश्रयमेकदोषं च ॥

तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ।
स्वेदस्वापश्वयथवः शोणिते पिशिते पुनः ॥

पाणिपादाश्रिताः स्फोटाः क्लेदः सन्धिषु चाधिकम् ।
कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि ॥
नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ।
क्षते च कृमयः शुक्रे स्वदारापत्यबाधनम् ॥

तत्रेत्यादिना त्वगाद्याश्रयविशेषवशेन कुष्ठलक्षणमुच्यते । तेषु मध्ये त्वचि स्थिते कुष्ठे तोदादयः । शोणितस्थिते स्वेदादयः । पाणिपादस्फोटादयो मांसगे । कौण्यादयो मेदःस्थिते । कौण्यं विकलपाणित्वम् । नासाभङ्गो नेत्ररागः स्वरक्षयः क्षते च कृमयश्चेत्येतदस्थिस्थे मज्जस्थे च । स्वदाराणामपत्यानां च बाधनं कुष्ठसंभवः शुक्राश्रिते कुष्ठे भवति ॥

यथापूर्वं च सर्वाणि स्युर्लिङ्गान्यसृगादिषु ।

असृगादिस्थिते कुष्ठे यथापूर्वं लिङ्गानि स्युः । यस्मिन् धातौ स्थितं तस्य यः पूर्वो धातुः तल्लिङ्गान्यपि तत्र भवन्तीत्यर्थः । तेन रक्ताश्रये त्वग्लिङ्गान्यपि भवन्ति । मांसाश्रये कुष्ठे त्वग्रक्ताश्रयाणि । मेदोगे त्वग्रक्तमांसाश्रयाणि । अस्थिगे त्वगादिमेदोन्ताश्रयाणि लक्षणानि । एवं यावच्छुक्रम् । शुक्रगे सर्वाण्येव लिङ्गानि भवन्तीत्युक्तं कुष्ठम् । कुष्ठैकसंभवमित्यादिना श्वित्रमुच्यते ॥

कुष्ठैकसंभवं श्वित्रं किलासं चारुणं च तत् ॥
निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ।

कुष्ठेनैकः सदृशो निदानदोषदूष्यसंप्राप्त्यादिकः संभवो यस्य तत्तथोक्तम् । तच्च श्वित्रं नाम्ना किलासं चारुणमपरिस्रावि च निर्दिष्टमाचार्यैः । तथा त्रिधातूद्भवसंश्रयं त्रयो धातवो वातपित्तश्लेष्माण उद्भवः त्रयश्च धातवो रक्तमांसमेदोलक्षणा आश्रयो यस्य तत्तथोक्तम् । धातुशब्देनोभयमुद्भवश्च संश्रयश्च गृह्यते ॥

वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥
सकण्डु च क्रमाद्रक्तमांसमेदस्सु चादिशेत् ।
वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥
अशुक्लरोमाबहुलमसंसृष्टं मिथो नवम् ।
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥
गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ।
स्पर्शैकाहारशय्यादिसेवनात् प्रायशो गदाः ॥
सर्वे संचारिणो नेत्रत्वग्विकारा विशेषतः ।

वातादित्यादिनोद्भवधातुत्रयक्रमेण लक्षणमुच्यते । संश्रयधातुषु वर्णेनैवेदृक्क्रमेणैवादिशेत् । तेन रूक्षारुणं वर्णेन रक्ताश्रितं श्वित्रम् । ताम्रं मांसगम् । श्वेतं मेदोगतमिति । उभयं क्रमेण कृच्छ्रम् । तच्चोत्तरोत्तरम् । उभयं वाताद्युद्भवं रक्तादिसंश्रयं चोत्तरोत्तरं कृच्छ्रसाध्यम् । तेन वातजं रक्ताश्रितं कृच्छ्रम् । ततोऽपि पित्तजं मांसाश्रितम् । ततोऽपि कफजं मेदोगतम् । अशुक्लरोमत्वादियुक्तं श्वित्रं साध्यम् । तद्विपर्यये वर्ज्यम् । गुह्यादिषु जातमचिरन्तनमपि वर्ज्यम् । प्रसङ्गेनाह स्पर्शेत्यादि । सुबोधम् । इति श्वित्रमुक्तम् ॥

क्रिमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥
बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ।
नामतो विंशतिविधा बाह्यास्तत्रासृजोद्भवाः ॥
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ।
बहुपादाश्च सूक्ष्माश्च यूकालिक्षाश्च नामतः ॥
द्विधा ते कोठपिटकाकण्डूगण्डान् प्रकुर्वते ।

क्रिमय उच्यन्ते द्विविधाः क्रिमयः बाह्या आभ्यन्तराश्च । जन्मभेदेन चतुर्विधाः । केचिद्बहिर्मलजाः । केचित् कफजाः । केचिदसृग्जाः । केचिद्विड्जाः इति । बहिर्मलः शरीरबाह्यः केशवस्त्रादिमलः । पुनर्नामभेदेन सर्वे विंशतिविधाः । तत्र बाह्या बहिर्मलजाः । ते ह्यसृजाहेतुकाः । सुबोधम् ॥

कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम् ॥
मधुरान्नगुळक्षीरदधिसक्तुनवोदनैः ।
शकृज्जा बहुविड्धान्यपर्णशाकौकुलादिभिः ॥

कुष्ठेत्यादि । अन्तर्जाः कफादिजन्मानः सर्वे कुष्ठैकहेतवः । तेषु चान्तरेषु मध्ये श्लेष्मजा अधिकं मधुरादिभिर्भवन्ति । शकृज्जा बहुविड्धान्यादिभिर्जायन्ते । ओकुलं कृतान्न उक्तम् काण्डस्थान्यपक्वानि सृष्टानि सस्यानीति ॥

कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ।
पृथुवद्ध्रनिभाः केचित् केचित् गण्डूपदोपमाः
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः ।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥
अन्त्रादा उदरावेष्टा हृदयादा महारुहाः ।
चुरवो दर्भकुसुमाः सुगन्धास्ते तु कुर्वते ॥
हृल्लासमास्यस्रवणमविपाकमरोचकम् ।
मूर्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥

कफादित्यादि । तत्र कफजा आमाशये जाताः वृद्धाः सन्तः पश्चात् सर्वजठरे सर्पन्ति । सुबोधम् । ते च कफजाः क्रिमयः । पुनस्ते चेति कफजाः क्रिमयः हृल्लासादिकं कुर्वत इति संबन्धः ॥

रक्तवाहिसिरास्थाना रक्तजा जन्तवोऽणवः ।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः
केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः ।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥

रक्तवाहीत्यादि । रक्तजा जन्तवः अणवः सूक्ष्मास्तेषां रक्तवाहिन्यः सिराः स्थानम् । ते च केशादादयश्चत्वारः सहसौरसमातर इति द्वौ एवं षट् । एके सौरसाः अपरे मातरः ॥

पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ।
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ॥
तदास्योद्गारनिश्वासा विड्गन्धानुविधायिनः ।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥
ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः ।
सौसुरादाः सलूनाख्या लेलिहा जनयन्ति च
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ।
रोमहर्षाग्निसदनगुदकण्डूविनिर्गमान् ॥

इति निदाने चतुर्दशोऽध्यायः ॥

पक्वेत्यादि पुरीषोत्थाः क्रिमयः पक्वाशये जायन्ते । अधोमुखाश्च भवन्ति । तेषु च वृद्धत्वाद्यदामाशयोन्मुखता भवति तदास्य पुरुषस्योद्गारनिश्वासा विड्गन्धानुविधायिनो भवन्ति । ते च पृथ्वादिगुणाः ककेरुकादयः लेलिहान्ताश्चेति पञ्चनामानः । एते विड्भेदादीन् जनयन्ति । एवं विंशतिः क्रिमयः । द्वौ बहिर्मलजौ । सप्त कफजाः । षट् रक्तजाः । पञ्च पुरीषजा इति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
निदाने चतुर्दशोऽध्यायः ।

---

# अथ पञ्चदशोऽध्यायः ।

---

महारोगत्वसामान्यात् कुष्ठानन्तरं वातव्याधिनिर्णयायाध्यायारम्भः ॥

अथातो वातव्याधिनिदानं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम् ।
अदुष्टदुष्टः पवनः शरीरस्य विशेषतः ॥
स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ।
स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः ॥
तददुष्टौ प्रयत्नेन यतितव्यमतः सदा ।

पुरुषेण वातादुष्टौ सदा यतितव्यम् । यतोऽस्य विश्वस्य सर्वप्रयोजनकरणे सर्वोपद्रवकरणे च यथाक्रमेण दुष्टोऽदुष्टश्च पवनः कारणम् । शरीरस्य तु विशेषेणादुष्टदुष्टोऽर्थानर्थकारणम् । स विश्वकर्मेत्यादि पूर्वाचार्यशैल्याद्वायुस्तोत्रम् ॥

तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम् ॥
समासाद्व्यासतो दोषभेदीये नाम धाम च ।
प्रत्येकं पञ्चधा चारो व्यापारश्चेह वैकृतम् ॥
तस्योच्यते विभागेन सनिदानं सलक्षणम् ।
असंख्यमपि संख्यायै यदशीत्या पुरेरितम् ॥
धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः ।
चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन् ॥
तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वावरणं बली ।
तत्र पक्वाशये क्रुद्धः शूलानाहान्त्रकूजनम् ॥
मलरोधाश्मवर्ध्मार्शस्त्रिकपृष्ठकटीग्रहम् ।
करोत्यधरकाये च तांस्तान् कृच्छ्रानुपद्रवान् ॥
आमाशये तृड्वमथुश्वासकासविषूचिकाः ।
कण्ठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः॥

तस्येति वातस्य प्राकृतं कर्मोत्साहोच्छ्वासादि । वैकृतं वृद्धिक्षयभेदात् कार्श्याङ्गसादादि । व्यासतो विस्तरेण । नाम प्राणादिकम् । धामोरःकण्ठादि पञ्चस्वपि भेदेषु प्रत्येकमुक्तम् । तथा चारो व्याप्तिः व्यापारश्चोक्तः । इह तु तस्यैव वायो रूपान्तरेण वैकृतमुच्यते । वायोर्द्विविधः कोपो धातुक्षयादावरणाच्च । स एव धातुक्षयकरैरित्यादिना प्रदर्श्यते । सुबोधम् ॥

श्रोत्रादिष्विन्द्रियवधं त्वचि स्फुटनरूक्षते ।
रक्ते तीव्रां रुजां स्वापं तापं रागं विवर्णताम् ॥
अरुच्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम् ।
मांसमेदोगतो ग्रन्थींस्तोदाढ्यान्कर्कशान्भ्रमम्
गुर्वङ्गं चातिरुक् स्तब्धं मुष्टिदण्डहतोपमम् ।
अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम्
मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं संततं रुजम् ।
शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव वा ॥
तद्वद्गर्भस्य शुक्रस्थः सिरास्वाध्मानरिक्तते ।
तत्स्थः स्नावस्थितः कुर्यात्गृध्रस्यायामकुब्जताः
वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः ।
प्रसारणाकुञ्चनयोः प्रवृत्तिं च सवेदनाम् ॥
सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम् ।
स्तम्भनाक्षेपणस्वापसन्ध्याकुञ्चनकम्पनम् ॥

श्रोत्रादिष्वित्यादिग्रहणान्नेत्ररसनादीनां ग्रहणम् । शुक्रस्थो गर्भस्यापि शुक्रस्य तद्वच्छीघ्रमुत्सर्गादिकं शुक्रवद्गर्भस्थ इति ; तत्स्थः सिरास्थः । वातपूर्णादि सन्धिगत लिङ्गम् । सर्वाङ्गसंश्रयो वायुस्तोदादीन् करोति ॥

यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ।
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः ॥
अधःप्रतिहतो वायुर्व्रजन्नूर्ध्वं हृदाश्रिताः ।
नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन्
आक्षिपेन् परितो गात्रं धनुर्वच्चास्य नामयेत् ।
कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक् ततः
कपोत इव कूजेच्च निस्संज्ञः सोऽपतन्त्रकः ॥

स एव चापतानाख्यो मुक्ते तु मरुता हृदि ।
अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥
गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥

यदा तु वायुः क्रुद्धः सन् सर्वा धमनीर्मुहुर्मुहुरभ्येति । तदाङ्गं शरीरमाक्षिपति संकोचयति । असौ नाम्ना व्याधिराक्षेपकः । अधःप्रतिहत इत्यादिनापतन्त्रकलक्षणमाह । प्रतिहतो दोषान्तरेण । अत्र च हृदि मरुता मुक्ते मुहुः स्वास्थ्यमश्नुवीत । आवृते च मरुता हृदि मुहुरस्वास्थ्यमश्नुवीत । एष चापतन्त्रको गर्भपातादिना नार्याः समुत्पन्नः कृच्छ्रतमः ॥

मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा
व्याप्नोति सकलं देहं जत्रुरायम्यते तदा ॥
अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भं च नेत्रयोः ।
करोति जृम्भां दशनं दशानानां कफोद्गमम् ॥
पार्श्वयोर्वेदनां वाक्यहनुपृष्ठशिराग्रहम् ।
अन्तरायाम इत्येष बाह्यायामश्च तद्विधः ॥
देहस्यबहिरायामात् पृष्ठतो ह्रियते शिरः ।
उरश्चोत्क्षिप्यते तत्र कन्धरा चावमृद्यते ॥
दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्तब्धगात्रता ।
बाह्यायामं धनुष्कम्पं ब्रुवते वेगिनं च तम् ॥

मन्ये संस्तभ्य इत्यादिनान्तरायामबहिरायामयोः साधारणम् । विशेषस्त्वन्तरायामे वक्षोऽभिमुखमाकुञ्चनम् । बहिरायामे पृष्ठाभिमुखमिति ॥

व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात् ।
व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम्
तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः ।
गते वेगे भवेत् स्वास्थ्यं सर्वेष्वाक्षेपकेषु तु ॥
जिह्वातिलेखनाच्छुष्कभक्षणादभिघाततः ।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू ॥
करोति विवृतास्यत्वमथवा संवृतास्यताम् ।
हनुस्रंसः स तेन स्यात् कृच्छ्राच्चर्वणभाषणम् ॥
वाग्वाहिनीसिरासंस्थोजिह्वांस्तम्भयतेऽनिलः।
जिह्वास्तम्भः सतेनान्नपानवाक्येष्वनीशता ॥

व्रणमित्यादिना व्रणायामः । स वर्जितोऽसाध्यः । येषु चानन्तरोक्तेष्वाक्षेपकेषु वायुवेगे गते स्वास्थ्यं भवति । हनुस्रंसलिङ्गमाह जिह्वेत्यादिना । कुपितोऽनिलो हनू स्रंसयित्वा भ्रंशयित्वा । हनुस्रंसः सन्धेर्भ्रंशः । वाग्वाहिनीत्यादिना जिह्वास्तम्भः । सुबोधम् ॥

शिरसा भारभरणादतिहास्यप्रभाषणात् ।
उत्त्रासवक्रक्षवथुखरकार्मुककर्षणात् ॥
विषमादुपधानाच्च कठिनानां च चर्वणात् ।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः ॥
वक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम् ।
ततोऽस्य कम्पते मूर्धा वाक्सङ्गः स्तब्धनेत्रता
दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः ।
गन्धाज्ञानं स्मृतेर्मोषस्त्रासः सुप्तस्य जायते ॥
निष्ठीवः पार्श्वतोऽयायादेकस्याक्ष्णोर्निमीलनम्
जत्रोरूर्ध्वं रुजास्तीव्राः शरीरार्धेऽधरेऽपि वा॥
तमाहुरर्दितं केचिदेकायाममथापरे ।
रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः ॥
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात्
सिराग्रहः

शिरस्येत्यादिनार्दितलिङ्गम् । खरकार्मुकमतिकठिनचापं तदाकर्षणात् । अस्यैवामयस्य केचिदाचार्या एकायाममिति नाम कुर्वन्ति । सिराग्रहलिङ्गमाह पवनो रक्तमाश्रित्येत्यादिना । सुबोधमन्यत् ॥

पक्षवधमाह ॥

गृहीत्वार्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च
पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन् ॥
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ।
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ॥
सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले ।
शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः ॥
कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षतहेतुकः ।

वायुस्तनोः कायस्यार्धं गृहीत्वा । अकर्मण्यः कर्मण्यसाधुः । केचिदाचार्यास्तमेकाङ्गरोगमिति विदुः । अन्ये आचार्याः पक्षवधमिति विदुः । तद्वदुभयभागग्रहे सर्वाङ्गरोगः स्यात् । शुद्धेन वायुना पक्षवधोऽतिकृच्छ्रसाध्यः । दोषान्तरयुक्तेन वायुना तु कृच्छ्रसाध्य एव । क्षतहेतुकः पक्षवधोऽचिकित्स्यः ॥

अथ दण्डकलक्षणमाह ॥

आमबद्धायनः कुर्यात् संस्तभ्याङ्गं कफान्वितः
असाध्यं हतसर्वेहं दण्डवद्दण्डकं मरुत् ॥
अंसमूलस्थितो वायुः सिराः संकोच्य तत्रगाः
बाहुप्रस्पन्दितहरं जनयत्यपबाहुकम् ॥
तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ।
बाहुचेष्टापहरणी विश्वभी नाम सा स्मृता ॥

आमबद्धायनो मरुत् । सुबोधम । अपबाहुकलिङ्गमंसमूल इत्यादि । विश्वभीलक्षणमाह । अङ्गुलीनां संबन्धिनी या कण्डरा तलं प्रति पाणितलाभिमुख्येन वर्तते सा कण्डरा बाहुपृष्ठतो यदा वायुकोपात् बाहुचेष्टामपहरति तदा विश्वभी नाम सा स्मृता ॥

वायुःकट्यांस्थितःसक्थ्नःकण्डरामाक्षिपेद्यदा ।
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि
कम्पते गमनारम्भे खञ्जन्निव च याति यः ।
कळायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥

वायुः कट्यामित्यादिनैकसक्थ्याक्षेपणवर्ज्यत्वे हेतुः । द्वयोः सक्थ्नोराक्षेपकः पङ्गुः खञ्जो विकलैकपादः । पङ्गुर्विकलोभयपादः । यस्य तु वातवशात् सक्थ्नः संबन्धि बन्धनं मुक्तं खञ्जन्निव च याति तं कळायखञ्जं विद्यात् ॥

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथायाससंक्षोभस्वप्नजागरैः ॥
सश्लेष्ममेदःपवनमाममत्यर्थसंचितम् ।
अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥
सक्थ्यस्थिनीप्रपूर्यान्तःश्लेष्मणास्तिमितेनतत्
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः
संयुतः पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥

अथोरुस्तम्भस्य निदानं संप्राप्तिश्चोच्यते शीतोष्णेत्यादिना । किञ्चिज्जीर्णम् किञ्चिदजीर्णमिति जीर्णाजीर्णम् । अभिभूयेत्यनेनेतरदोषस्य प्रकोपेऽपीति गम्यते । सुबोधम् । अपरे आचार्यास्तस्यैवाढ्यवात इति नामाहुः ॥

वातशोणितजः शोफो जानुमध्ये महारुजः ।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलःक्रोष्टुकशीर्षवत् ॥
रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा ।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥
पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता।
सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते

क्रोष्टुकशीर्षलिङ्गमाह वातशोणितज इत्यादिना । क्रोष्टुकशीर्षो जम्बुकशिरः । रुगित्यादिना वातकण्टकम । पार्ष्णिं प्रतीत्यादिना विश्वभीवत् गृध्रसी च व्याख्येया ॥

विश्वभीगृद्ध्रसीचोक्ताखल्लीतीव्ररुजान्विता ।
हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत् ॥
पादहर्षः स विज्ञेयः कफमारुतकोपजः ।
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः
विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत् ।

इति निदाने पञ्चदशोऽध्यायः ॥

विश्वचीगृध्रस्योः संयोगात्तीव्ररुजान्वितत्वे खञ्जीत्युच्यते । अथ पादहर्षलक्षणमाह हृष्येते इत्यादिना । पाददाहलक्षणमाह पादयोरित्यादिना ।

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
निदाने पञ्चदशोऽध्यायः ॥

---

# अथ षोडशोऽध्यायः ।

वातहेतुत्वसामान्याद्वातव्याध्यनन्तरं वातशोणितनिर्णयायाध्यायारम्भः ॥

अथातो वातशोणितनिदानं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम् ।
भजतां विधिहीनं च स्वप्नजागरमैथुनम् ॥
प्रायेण सुकुमाराणामचङ्क्रमणशीलिनाम् ।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।
तादृशेनासृजा रुद्धः प्राक्तदेव प्रदूषयेत् ॥

असृजा रुद्धो वायुर्वातशोणितम् । कथमित्याह विदाहीत्यादि । सुकुमारा अल्पेऽर्थमृदुशरीरावयवाः सर्वक्लेशासमर्था उक्ताः । ते पुनर्बाला एवेत्येके । प्रागिति क्रमाद्धात्वन्तरमपि प्रदूषयेत् ॥

आढ्यरोगं खुडं वातबलासं वातशोणितम् ।
तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति ॥
विशेषाद्यानयानाद्यैः प्रलम्बौ तस्य लक्षणम् ।
भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥
जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु ।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च ।
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥
आखोरिव विषं क्रुद्धं कृत्स्नं देहं प्रधावति ।

तच्च वातशोणितमाचार्या आढ्यरोगादिभिराहुः । तच्च वातशोणितं प्रथमं पादौ प्रधावति । यानयानाद्यैः प्रलम्बौ पादौ विशेषात् प्रधावति । तस्य च वातास्रस्य कुष्ठसदृशमतिश्लक्ष्णखरस्पर्शाद्युक्तं पूर्वरूपं भवत्यत्र तु सादादीन्यपि भवन्ति ॥

त्वङ्मांसाश्रयमुत्तानं तत् पूर्वं जायते ततः ॥
कालान्तरेण गम्भीरं सर्वान् धातूनभिद्रवत् ।
कण्ड्वादिसंयुतोत्ताने त्वक् ताम्रश्यावलोहिता
सायामा भृशदाहोषा गम्भीरेऽधिकपूर्वरुक् ।
श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु ॥
भिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान् ।
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ॥

तच्च द्विविधम् । पूर्वमेव यावत्त्वङ्मांसाश्रयं तावदुत्तानमुच्यते । ततः क्रमेण सर्वान् धातूनपि गच्छद्गम्भीराख्यां लभते । अथोत्तानलिङ्गमाह कण्ड्वादीत्यादिना गम्भीरेत्यादिना गम्भीरलिङ्गम् । गम्भीरे श्वयथुरुत्तानश्वयथो-

रप्यधिकरुग्भवति । तथा ग्रथिन: कठिनः । खञ्जो विकलैकपादः । पङ्गुः [illegible] विकलः॥

वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ।
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥
धमन्यङ्गुलिसन्धीनां संकोचोऽङ्गग्रहोऽतिरुक्
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ।
रक्ते शोफोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥
पित्ते विदाहः संमोहः स्वेदो मूर्छा मदः सतृट्
स्पर्शाक्षमत्वं रुग्रागः शोफः पाको भृशोष्मता
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।
कण्डूर्मन्दा च रुग्द्वन्द्वसर्वलिङ्गं च संकरे ॥

वातेऽधिकेत्यादि वाताधिकलिङ्गम । रक्तेऽधिके वातास्रे शोफादिकं लिङ्गम् । पित्तेऽधिके वातास्रे विदाहादि लिङ्गम् । स्तैमित्यादि कफेऽधिके । संकरे संसर्गे सन्निपाते च यथासंख्येन द्वन्द्वसर्वलिङ्गम् । यथास्वलिङ्गं च भवति ॥

एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।
त्रिदोषजं त्यजेत् स्रावि स्तब्धमर्बुदकारि च ॥

तत्र वातशोणितमेकदोषजं नवं सत् साध्यम् । अनेकदोषजं याप्यम । त्रिदोषजं त्यजेदसाध्यत्वात् । स्रावित्वादियुक्तं च । अर्बुदं स्थिरं घनं सव्रणमधिकमांसम् ॥

रक्तमार्गं निहन्त्याशु शाखासन्धिषु मारुतः ।
निविश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून् ।

वायुः शाखासन्धिषु निविश्य रक्तस्य मार्गमाशु निहन्ति । ते च वायुरक्ते परस्परमावार्य वेदनाभी रुजाभिः पुरुषस्यासून् हरतः । न केवलमेषैवावरणविधा यावद्वक्ष्यमाणेन प्रकारेणानेकधापि संभवति । तां च प्रदर्शयितुं प्रथमं पञ्चसु वायुविशेषेषु निदानं लक्षणं च सैव च वायौ पञ्चात्मक इत्यादिना प्रदर्श्यते । वायोः सर्वगत्वादावरणं सिद्धम् ॥

वायौ पञ्चात्मके प्राणो रौक्ष्यव्यायामलङ्घनैः।
अत्याहाराभिघाताध्ववेगोदीरणधारणैः ॥
कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेत् ।
पीनसार्दिततृट्कासश्वासादींश्चामयान्बहून् ॥

तेषु च प्राणो रौक्ष्यादिभिः कुपितश्चक्षुराद्युपघातं पीनसादींश्च यथाकोपं बहूनुपद्रवान् कुरुते ॥

उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः ।
गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् ॥
कण्ठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान् ।
कुर्याच्च गळगण्डादीनतांस्तानजत्रूर्ध्वसंश्रयान्॥

उदानः क्षवथुधारणादिभिर्विकृतः कण्ठरोगादीनन्यांश्च जत्रूर्ध्वजान्यथाकोपं गदान् कुर्यात् ॥

व्यानोऽतिगमनस्थानक्रीडाविषमचेष्टितैः ।
विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥
पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान् ।

सर्वाङ्गरोगनिस्तोदरोमहर्षाङ्गसुप्तताः ॥
कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वाङ्गगान् गदान् ।

व्यानोऽतिगमनातिस्थानादिभिर्दूषितः पुंस्त्वभ्रंशादीनन्यांश्च सर्वाङ्गगान् गदान् कुर्यात् । पुंस्त्वं शुक्रम् ॥ सर्वाङ्गरोग उभयपक्षवधः ॥

समानो विषमाजीर्णशीतसंकीर्णभोजनैः ॥
करोत्यकालशयनजागराद्यैश्च दूषितः ।
शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान्॥

समानो विषमभोजनादिभिर्दूषितः शूलादीन् पक्वामाशयजान् गदान् करोति । अकाले बहु वाल्पं वा भुक्तं तु विषमाशनम् ॥

अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः ।
यानयानासनस्थानचङ्क्रमैश्चातिसेवितैः ॥
कुपितःकुरुतेरोगानकृच्छ्रान्पक्वाशयाश्रयान् ।
मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून् ॥

अपानो रूक्षादिभिर्यानयानादिभिश्चातिसेवितैः कुपितः मूत्रदोषादिकान् पक्वाशयाश्रितान् अतिकृच्छ्रान् रोगान् कुरुते । सर्वत्र चादिग्रहणान्यागमाविरुद्धेनानुमानेन यथासंभवं व्याख्येयानि ॥

सर्वं च मारुतं सामं तन्द्रास्तैमित्यगौरवैः ।
स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः॥
कटुरूक्षाभिलाषेण तद्विधोपशयेन च ।
युक्तं विद्यान्निरामं तु तन्द्रादीनां विपर्ययात्॥

सर्वं च प्राणादिकं मारुतं तन्द्रादिभिरन्वितं सामं विद्याद्वैद्य इति शेषः । तन्द्रादिवैपरीत्यान्निरामम् ॥

वायोरावरणं चातो बहुभेदं प्रवक्ष्यते ।
लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥
कटुकोष्णाम्ललवणैर्विदाहः शीतकामता ।
शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ॥
लङ्घनायासरूक्षोष्णकामता च कफावृते ।
रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरजा भृशम् ॥
भवेच्च रागी श्वयथुर्जायन्ते मण्डलानि च ।
मांसेन कठिनः शोफो विवर्णः पिटकास्तथा
हर्षः पिपीलिकानां च संचार इव जायते ।
चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसावृते ।

अतोऽनन्तरं वायोः पित्तादिविशेषात् बहुभेदमावरणं वक्ष्यते । दाहादिकं पित्तावृते लिङ्गम् । शैत्यादिकं कफावृते । सदाहत्वगार्त्यादि रक्तावृते । कठिनशोफादि मांसेन । चलत्वादियुतः शोफ आढ्यवातनामा कृच्छ्रसाध्यो मेदसावृते ॥

स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनन्दति ॥
सूच्येव तुद्यतेऽत्यर्थमङ्गं सीदति शूल्यते ।
मज्जावृते विनमनं जृम्भणं परिवेष्टनम् ॥
शूलं च पीड्यमाने च पाणिभ्यां लभते सुखम्
शुक्रावृतेऽतिवेगो वा न वा निष्फलतापि वा॥
भुक्ते कुक्षौ रुजाजीर्णे शाम्यत्यन्नावृतेऽनिले ।
मूत्राप्रवृत्तिराध्मानं वस्तेर्मूत्रावृते भवेत् ॥
विडावृते विबन्धोऽधः स्वे स्थाने परिकृन्तति

व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ।
शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत् ॥
सर्वधात्वावृते वायौ श्रोणिवंक्षण पृष्ठरुक् ।
विलोमो मारुतोऽस्वास्थ्यं हृदयं पीड्यतेऽति च

उष्णस्पर्शाद्यभिनन्दनाद्यस्थ्यावृते । अङ्गविनमनादिकं मज्जावृते । अतिवेगादिकं शुक्रावृते । शुक्रफलं गर्भः । अन्नावृतेऽनिले भुक्ते कुक्षिरुजादि । मूत्रावृते मूत्राप्रवृत्त्यादि लिङ्गम् । विशा पुरीषेणावृते विबन्धादि । श्रोणिरुगादि यौगपद्येन सर्वधात्वावृते लिङ्गमिति ॥

सामान्येन वायोरावरणमुक्त्वा प्राणादिभेदेनोच्यते ॥

भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते ।
विदग्धेऽन्ने च वमनमुदाने विभ्रमादयः ॥
दाहोऽन्तरूर्जोभ्रंशश्च दाहो व्याने तु सर्वगः ।
क्लमोऽङ्गचेष्टासङ्गश्च संतापः सहवेदनः ॥
समान ऊष्मोपहतिरतिस्वेदोऽरतिः सतृट् ।
दाहश्च स्यादपाने तु मले हारिद्रवर्णता ॥
रजोऽतिवृद्धिस्तापश्च योनिमेहनपायुषु ।

भ्रमादियुतं पित्तेन प्राणाख्ये वायावावृते भवति । पित्तेनोदान आवृते विभ्रमान्तर्दाहादयः । विभ्रमो मोहप्रायः । पित्तेन व्याने आवृते सर्वाङ्गीणदाहादिलक्षणम् । अग्न्युपहतत्वादिदाहान्तं पित्तेन समाने आवृते । हारिद्रपुरीषत्वादि पित्तेनापानाख्येऽनिले आवृते रूपम् ॥

श्लेष्मणा त्वावृते प्राणे सादस्तन्द्रारुचिर्वमिः ।
ष्ठीवनक्षवथूद्गारनिश्वासोच्छ्वाससंग्रहः ॥
उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ।
बलवर्णप्रणाशश्च व्याने पर्वास्थिवाग्ग्रहः ॥
गुरुताङ्गेषु सर्वेषु स्खलितं च गतौ भृशम् ।
समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता ॥
अपाने सकफं मूत्रशकृतोः स्यात् प्रवर्तनम् ।
इति द्वाविंशतिविधं वायोरावरणं विदुः ॥

श्लेष्मणेत्यादिना पित्तवत् क्रमेणोच्यते । क्षवथ्वादीनां संग्रहः । सुबोधमन्यत् । एवं द्वाभ्यां दोषाभ्यां रक्तादिभिः षड्भिर्धातुभिरन्नेन मूत्रेण विशा सर्वधातुभिः पुनः प्राणादिपञ्चकस्य पित्तेन तद्वत् कफेनेति द्वाविंशतिविधं वायोरावरणमुक्तम् ॥

प्राणादयस्तथान्योन्यमावृण्वन्ति यथाक्रमम् ।
सर्वेऽपि विंशतिविधं विद्यादावरणं च तत् ॥
निश्वासोच्छ्वाससंरोधःप्रतिश्यायःशिरोग्रहः ।
हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥
उदानेनावृते प्राणे वर्णौजोबलसंक्षयः ।

सर्वेऽपि प्राणादयः परस्परेण यथाक्रममावृण्वन्ति । तच्चान्योन्यावरणं विंशतिविधं विद्यात् । तथा च प्राणादीनामन्यतमःशेषाणां चतुर्णां क्रमेणावारको भवति । एवं पञ्च प्राणादयो यतः प्रत्येकं चतुरो भेदान् यान्त्यतो विंशतिविधमावरणम् । तत्र च प्राणेनोदान आवृते निश्वा-

सरोधादिकं भवति । एवमुदानेनावृते प्राणे-बलादिक्षयः ॥

दिशानया च विभजेत् सर्वमावरणं भिषक् ॥
स्थानान्यवेक्ष्यवातानांवृद्धिंहानिंचकर्मणाम् ।

अनयैव दिशाऽनुक्तमावरणं स्वबुध्या वैद्यो विभजेत् । कथमित्याह । वातानां प्राणादीनां दोषभेदीयोक्तेन प्रकारेण स्थानान्यवेक्ष्य तथा तत्कर्मणां ष्ठीवनादीनां वृद्धिं हानिं चावेक्ष्य । तेनैवं भवत्यस्य वायोरयं प्रदेशस्तत्र स्थितस्य चेदं कर्माम्नातं तच्च सम्प्रत्यनेन रूपेण वृद्धं वा हीनं वा यदा दृश्यते तदानुमीयतेऽनेनावृतोऽयमिति । न केवलमेतदेवावरणं यावदेभ्योऽन्यदप्यधिकमस्तीत्याह ॥

प्राणादीनां च पञ्चानां मिश्रमावरणं मिथः ॥
पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः ।
मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा ॥
तारतम्यविकल्पाच्च यात्यावृतिरसंख्यताम् ।

प्राणादीनामित्यादि । प्राणादयो द्व्यादिसंयोगेन मिश्राः कदाचिदावार्या भवन्ति । कदाचिदावारका इत्यावृतिरसंख्यतां यातीति संबन्धः । तथैव पित्तादिमिश्रा अपि । द्वौ दोषौ । षड् धातवो रक्तादयः । अन्नं शकृन्मूत्रं सर्वधातुश्चेति । तैश्च पित्तादिभिर्द्व्यादिसंयोगेन मिश्रैः अनेकधा प्राणादिमिश्रणाभिः । सर्वेषु संयोगेषु किञ्चिदधिकतरं किञ्चिदधिकतममिति । एवमनेकधा विकल्पनादावृतिरसङ्ख्यतां याति ॥

तां लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥
शनैश्शनैश्चोपशयाद् गूढामपि मुहुर्मुहुः ।
विशेषाज्जीवितं प्राण उदानो बलमुच्यते ॥
स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ।

तां चानेकविधामावृतिं यथास्वं लक्षणैर्दोषाणां लक्षयेत् । गूढां तु शनैश्शनैर्मुहुर्मुहुश्चोपशयेन लक्षयेत् । तत्र च प्राणोदानौ यत्नतो रक्षेत् । कुत इत्याह । विशेषादित्यादि । सुबोधम् ॥

आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः
प्रयत्नेनापि दुःसाधा भवेयुर्वानुपक्रमाः ।

आवृताश्च वायवोऽनुपलक्षिता उपलक्षिताश्चाप्युपेक्षिता अतीतसंवत्सराः सन्तः प्रयत्नेनाप्युपचर्यमाणा दुःसाधा असाध्या एव वा भवेयुः । अतोऽवश्यमुपलक्षयेत् ॥

विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ॥
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ।

इति निदाने षोडशोऽध्यायः ॥

आवृतानां वायूनां उपेक्षणाद्विद्रध्यादयो भवेयुरतो नोपेक्षेतेति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
निदाने षोडशोऽध्यायः ॥

॥ निदानस्थानं तृतीयं समाप्तम् ॥

# चिकित्सितस्थानम् ।

## प्रथमोऽध्यायः ।

निदानस्थाने ज्वरादिक्रमेण प्रधानरोगाणां हेत्वादिकमुक्त्वा तेषामेव तेनैव क्रमेण साध्यानां सतामवसरप्राप्तं प्रतीकारं प्रदर्शयितुं चतुर्थस्थानमारभ्यते ॥

अथातो ज्वरचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

अथेत्यादि पूर्ववद्व्याख्येयम । इतीत्यादि च । चिकित्सितं प्रतीकारः ॥

आमाशयस्थोहत्वाग्निंसामोमार्गान्पिधाययत् ।
विदधाति ज्वरं दोषस्तस्मात् कुर्वीत लंघनम्
प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन् ।
बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः ॥

आमाशयस्थ इत्यादिना प्रकृतार्थप्रस्तावना । यद्यस्मादामाशयस्थत्वादिरूपो दोषो दुष्टो वातादिर्ज्वरं विदधाति तस्माज्ज्वरे प्रथमं * लंघनं कुर्वीतेति संबन्धः । हेतुनिर्दे-

*यद्यपि लंघनं द्वादशसु परिभाषितं लंघनबृंहणी यत्र पुनरुपवासे वर्तते । कुतस्तेषामवस्थावशात् प्रयोग इति जर्जटः ॥

शेनैतत् प्रदर्श्यते येषु ज्वरेष्वेवंरूपता संप्राप्तिस्तत्रैव लंघनं विधेयं नान्यत्र । तथा च वक्ष्यति । "शुद्धवातक्षयागन्तुजीर्णज्वरिषु लंघनम् । नेष्यत" इति । अत्र च लंघनशब्देन न वमनादिकं सर्वं लंघनमुच्यते । किन्तु उपवास एव । ननु तल्लंघनं कस्यामवस्थायां कुर्वीतेत्याह । प्राग्रूपेष्वित्यादि । ज्वरस्य पूर्वरूपदर्शन एव लंघनं कुर्वीत यदा तु प्राग्रूपदर्शनकाले निदानस्य साधारणत्वादपरिज्ञानाद्वा लंघनाविषयता आशङ्क्यते तदा ज्वरादावपि योज्यम् । ज्वरस्यादिर्ज्वरादिः ज्वरप्रारम्भ इत्युक्तं प्राग्रूपेषु ज्वरादौ वेति । अन्ये पुनरेवं वर्णयन्ति ज्वरस्य प्राग्रूपेषु लंघनमवश्यं कुर्वीत ज्वरादौ ज्वरव्यक्तताप्रादुर्भावे वा लंघनं कुर्वीत तेन शुद्धवातादिविषये व्यक्ते ज्वरे लंघनं न विधेयम् । बलं यत्नेन पालयन्नित्यनेनैतदुच्यते तावल्लंघनं कुर्वी-

त यावता बलहानिर्न भवति तेन लंघितलिङ्गप्रादुर्भावाभावेऽपि बलपालनानुरोधेन लंघनाद्विरमेत् । बलाधिष्ठानमित्यादिना बलपालने हेतुरुच्यते ॥

**लंघनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति ।**
**स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलमोजश्च जायते**

लंघनैरित्यादिना सर्वलंघनानां ज्वरविषयाणां सुप्रयुक्तानां फलनिरूपणम् । लंघनैर्वमनादिभिर्दोषे तत्साध्ये ज्वरारम्भके क्षपिते तत्क्षपणाच्च भस्मापनयनेनेवाग्नौ दीप्ते लाघवे चोत्पन्ने स्वास्थ्यादिकं जायते दोषक्षपणादूर्ध्वं लंघनेनानिन्धनत्वादग्नेर्नाश एव स्वास्थ्याद्यभावश्च । तथा चोक्तम् । "संशोधनास्रविस्रावस्नेहयोजनलंघनैर्यात्यग्निर्मन्दता"मिति । तत्र च लंघनशब्देन उपवास एव भण्यते । स्वास्थ्यं रोगाभावः । पक्तिरन्नादीनां पाकः ॥

ननु किं सर्वत्रानियमेन सर्वमेव लंघनं विधेयमाहोस्वित् केनचिद्विशेषेणेत्याह ॥

**तत्रोत्कृष्टे समुत्क्लिष्टे कफप्राये चले मले ।**
**सहृल्लासप्रसेकान्नद्वेषकासविषूचिके ॥**
**सद्यो भुक्तस्य संजाते ज्वरे सामे विशेषतः ।**
**वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ॥**
**श्वासातीसारसंमोहहृद्रोगविषमज्वरान् ।**

तत्रेत्यादि । उत्कृष्टः प्रभूतः । समुत्क्लिष्टः स्थानात्समन्ताच्चालितः । कफप्रायः श्लेष्मप्रधानः । चलो नैकत्रस्थितिशीलः । सह हृल्लासादिभिर्वर्तते यो मलः तथाविधे मले दोषे वमनार्हस्य सतो ज्वरितस्य वमनमेव शस्तं नान्यलंघनमिति संबन्धः । सद्यो भुक्तस्य त्वष्टविधेऽपि ज्वरे संजाते वमनमेव शस्यते । आगन्तावपि भोजनस्याजरणादिना दोषानुबन्धरक्षणार्थः । सामे तु ज्वरे सद्यो भुक्तस्य संजाते विशेषतो वमनम् । वमनार्हग्रहणेन प्रतिषिद्धवमनानां गर्भिण्यादीनां वमनविषयेऽपि ज्वरे वमनं प्रतिषिध्यते । तच्च वमनमन्यथा उत्क्लिष्टत्वादिलक्षणविपरीते मले प्रयुक्तं श्वासादीन् ज्वरितस्य कुर्यात् । अनुत्क्लिष्टस्योत्क्लेशेन वायोर्मार्गरोधाच्छ्वासा इषदुत्क्लिष्टस्य स्यन्दनेनाग्निनाशादतीसारः उपशुष्के दोष औषधस्य तैक्ष्ण्यात् संमोहः तथाविधएवोर्ध्वनयनाद्धृद्रोगः दोषस्य स्वल्पत्वात् बहिरनिर्हरणा दूरदूरतरस्रोतःपूरणेन वा यथाहेतुः सततकादिको विषमज्वरः ॥

पिप्पलीत्यादिना वमनयोगमाह ॥

**पिप्पलीभिर्युतां गाळां कलिङ्गैर्मधुकेन वा ।**
**पीत्वोष्णतोयेन वमेन्मध्वम्बु लवणाम्बु वा ॥**

दोषदेशाद्यपेक्षया यथायोग्यं योगविकल्पः । गाळा मदनफलम् । तां गाळां कदाचित् पिप्पलीभिर्युक्तामुष्णाम्बुना पीत्वा वमेत् कदाचिदिन्द्रयवैः कदाचिन्मधुयष्ट्या अथवा मधुना संयुक्तमुष्णाम्बु पीत्वा वमेत् । लवणेन वा संयुक्तमत्रमधुनोऽप्रयोगः । गाळानां संयोगिनां समानां कोष्ठापेक्षा मात्रा

मधुलवणयोरौषधव्याप्तियोग्यता मात्रा ॥

**पटोलनिम्बककोंटवेत्रपत्रजलानिवा ।**
**पेयाम्मण्डं रसं चेक्षोर्मद्यं कल्पोदितानि वा ॥**
**वमनानि प्रयुञ्जीत बलकालविभागवित् ।**

अथवा पटोलादीनां पत्रजलं पीत्वा वमेदिति संबन्धः । पत्राणां जलस्य च जलसंस्कारापादनी मात्रा । पाने तु जलस्य कोष्ठाद्यपेक्षया तृप्त्यवसानं वा मात्रा । पेयामण्डादीनामिवात्रापि पीत्वा वमेदिति संबध्यते । वमेदित्यङ्गुल्यादिनोपायेनोद्गिरेत् । मद्यं पूर्वभुक्ताहारापेक्षया यथायोग्यामिति वमनानि बलकालविभागवित् प्रयुञ्जीत । अथवा वमनकल्पे प्रदर्शितानि * वमनानि च प्रयुञ्जीत । तेनैतदुक्तं व्याध्यौषधबलानुरोधेन औषधविषयानुरोधेन चान्यतमस्य वमनस्य प्रयोग इति ।

* वमनानीति बहुवचनं किं उच्यते । न संकुचावर्निर्हृतदोष इति जर्जटः ॥

**कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम् ॥**
**दोषाणां समुदीर्णानां पाचनाय शमाय च ।**

अनन्तरोक्तप्रकारेण कृते वमने विशोषणमुपवासादिना कुर्यान्न तु रूक्ष्ययोगेऽप्यवश्यं तदहरेव वमनविधिप्रदर्शितप्रकारेण पेयां सेवेत । तथा यत्रापि वमनस्याविषयत्वाद्विषयेऽपि वा निमित्तान्तराद्वमनं न कृतं तत्रापि विशोषणं कुर्यात् । दोषाणामित्यादिना यथोक्तोपशोषणप्रयोजनप्रदर्शनम् ॥

**आमेन भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते ॥**
**तस्मादादोषपचनाज्ज्वरितानुपवासयेत् ।**

आमेनेत्यादिनोपवासावधिप्रदर्शनम् । यथाबाह्येऽग्नौ भस्मना छन्नेऽन्नं न विपच्यते एवमान्तरेऽप्यामेन च्छन्ने । तस्माद्दोषस्य निरामतोत्पत्तिरुपवासानामवधिः । उपपूर्वो वसिर्भोजननिवृत्तौ वर्तते ॥

**तृष्णगल्पाल्पमुष्णाम्बुपिबेद्वातकफज्वरे ॥**
**तत् कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ।**
**उदीर्य चाग्निं स्रोतांसि मृदूकृत्य विशोधयेत् ॥**
**लीनपित्तानिलस्वेदशकृन्मूत्रानुलोमनम् ।**
**निद्राजाड्यारुचिहरं प्राणानामवलम्बनम् ।**

तस्मिंश्च लंघने क्रियमाणे तृष्णगतिमात्रां तृष्णामनुभवन्नेव ‖ वातकफज्वरे अल्पाल्पमुष्णाम्बु पिबेत् । तच्चोष्णाम्बु पीतं मार्गावारकं कफं विलयं नीत्वा तृष्णां निवर्तयेत् । अग्न्युदीरणेन च स्रोतांसि मृदूकृत्य तान्येव शोधयेत् । तथा लीनानामनुत्क्लिष्टरूपाणामपि पित्तादीनामनुलोमनं मार्गप्रेरकं निद्रादिहरं च । निद्रा ह्यस्वास्थ्यहेतुका गृहीता । प्राणानामवलम्बनमम्बु संतर्पणस्वभावत्वात् । एवं यथोक्तविषये उष्णाम्बुन एव प्रयोगः ।

‖ किं वातकफज्वरे द्वन्द्वसमुत्थ एव नेत्याह वाते श्लेष्मणि वा कवोष्णं जलं हितं तयोः समुदितयो रप्युष्णमविरोधीति च ।

विपरीतमित्यादिना तत्रैव शीताम्बुपरिहारे हेतुरुच्यते ॥

विपरीतमतः शीतं दोषसंघातवर्धनम् ॥

उष्णाम्बुनो गुणैर्विपरीतं शीताम्बु दोषसंघातवर्धनम् च ॥

उष्णमित्यादिना केवलपित्तादीनामुष्णाम्बुप्रतिषेधं शीताम्बुप्रयोगं च दर्शयति ॥

उष्णमेवंगुणत्वेऽपियुञ्ज्यान्नैकान्तपित्तळे ।
उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि ॥
विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि ।
घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् ॥
शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम्

उष्णमनन्तरप्रदर्शिताग्न्युदीरणस्रोतश्शोधनत्वादिगुणसंयुक्तत्वेऽप्येकान्तपित्तळादौ व्याधावातुरे वा न युञ्ज्यात् । उद्रिक्तमन्यदोषाभिभावि पित्तं यत्र । दवथुश्चक्षुरादीन्द्रियाश्रयेषु दाहः । दाहः सर्वाङ्गीणस्तीव्र एव । ग्रीष्मकाळे स्वभावादुष्णाम्बु नेष्यते । यदा तु ग्रीष्मे देशादिविशेषवशाद्वातकफयोरुत्कृष्टतोंतदा स्तोकं हितमेव । तेभ्यश्चैकान्तपित्तळादिभ्यो * घनादिसाधितं शीतं तोयं हितं तद्धि पाचनं तृड्ज्वरापहं च ॥

*ननु नागरस्य कटुकत्वात् कथं प्रयोगः । उच्यते । आमाशयसमुत्थत्वाज्ज्वरस्येष्यत एवान्यद्रव्यसंयुक्तस्य जलसंस्कारार्थमावाप इति जर्जटः । तथा चान्ये पठन्ति । यच्चास्य शृतशीताम्बु षडङ्गादि प्रयुज्यतेकर्षमात्रं ततो दत्वा क्वाथयेत् प्रास्थिकेऽम्भसीति ॥

उष्णाम्बुप्रतिषेधप्रसंङ्गे सर्वेषां पित्तविरुद्धानां ज्वरे प्रतिषेध उच्यते ॥

ऊष्मापित्तादृतेनास्तिज्वरोनास्त्यूष्मणाविना ।
तस्मात्पित्तविरुद्धानित्यजेत्पित्ताधिकेऽधिकम्
स्नानाभ्यङ्गप्रदेहांश्च परिशेषं च लङ्घनम् ॥

ऊष्मेत्यादि पित्तनिमित्तत्वात् सर्वज्वरेऽपि पित्तविरुद्धानि त्यजेत् । पित्ताधिके तु ज्वरे पित्तविरुद्धान्याधिकं त्यजेत् । पित्ताविरुद्धं यत् पित्तकारि तच्च कफज्वरादौ किञ्चित् त्यजेदित्यधिकशब्दाल्लभ्यते । स्नानादींश्च सर्वस्मिन् ज्वरे त्यजेत् । तथा परिशेषं लंघनं अवस्थाविशेषवशेनोक्ताल्लंघनादन्यलंघनं परिशेषम् ॥

अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे ।
न पिबेदौषधं तद्धि भूय एवाममावहेत् ॥
आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव ।

अजीर्ण इत्यादिना सामे ज्वरे औषधप्रतिषेधप्रदर्शनम् । अजीर्ण इवेत्यादिना तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् । आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् । निहन्यादपि चैतेषां विभ्रमः सहसातुरमिति स्मारयति । तीव्ररुजाग्रहणं प्रभूतामोपलक्षणार्थम् । अल्पेऽस्वामेऽग्नेः किञ्चिच्छकत्वात् क्काथादिकं प्रयुज्यत एव । न केवलं साम औषधं त्यजेत् यावत क्षीरमपि त्यजेदिति प्रदर्शनार्थमाह आमाभिभूतकोष्ठस्येत्यादि । यस्य ह्यामेनाभिभूतः कोष्ठस्तस्य दीपनत्वादियुक्तमप्यौषधं न युज्यते किमुत क्षीरम । अहि दृष्टान्तेन विषस्य दुष्टता प्रदर्शिता ॥

इति प्रसङ्गेन ज्वरे परिहार्यदर्शनं कृत्वा सोदर्देत्यादिनावस्थाविशेषेण विधेयविशेषं नियमयति ॥

सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि ।
वातश्लेष्मात्मके स्वेदः प्रशस्तः स प्रवर्तयेत् ।
स्वेदमूत्रशकृद्वातान् कुर्यादग्नेश्च पाटवम् ॥
स्नेहोक्तमाचारविधिं सर्वतश्चानुपालयेत् ॥

वातश्लेष्मात्मके ज्वरे उदर्दादिना यथासंभवं संयुक्ते स्वेदाख्य उपक्रमः शस्तः स स्वेदः स्वेदादीनि प्रवर्तयेत् । उदर्दो नाम कफरोगः प्रदर्शितः । स्नेहोक्त आचारविधिरुष्णोदकोपचारी स्यादित्यादिकः ॥

लंघनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ।
मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा ॥

‡ लंघनमित्यादिना पूर्वोक्तस्यानियमेन क्रमनियमेन च प्रदर्शनम । लंघनमुपवासः । स्वेदनं स्वेदः । कालः परित्रासक्रमः । यवाग्वः पेयाः । तिक्तको रसस्तिक्तरसयुक्तद्रव्योपयोगः । वमनं शोधनं न तु पाचनम । यथावस्थमित्युक्तविषयानतिक्रमेण मलानां पाचनानि स्युः । अथवा क्रमेण लंघने क्रियमाणे दोषस्य निबिडत्वविनाशाय प्रथममेव स्वेदनं ततः काल उपवासनिरपेक्षतया तत उपवासेन स्वेदेन कालक्रमेण च दोषे मार्दवं याते बुभुक्षायां जातायां यवाग्वस्ततस्तिक्तो रसो मुस्तापर्पटादिः ॥

‡ लंघनादि तिक्तरसान्तं पञ्चविधं पाचनमिति जर्जटः

शुद्धवातक्षयागन्तुजीर्णज्वरिषु लंघनम् ।
नेष्यते तेषु हि हितं शमनं यन्न कर्शनम् ॥

सामान्येन नवज्वरे लंघनोपक्रमाच्छुद्धवातादिज्वराणां लंघनस्य प्रतिषेधः जीर्णज्वरे च लंघनविषयेऽपि । तेषु च शुद्धवातादिषु यस्माच्छमनं तच्च शमनं यन्न कर्शनं नाप्यतिबृंहणं रोगस्वभावादित्यर्थाल्लभ्यते ॥

तत्रसामज्वराकृत्या जानीयादविशोषितम् ।
द्विविधोपक्रमज्ञानमवेक्षेत च लंघने ॥

तत्रेत्यादिना लंघनस्यायोगसम्यग्योगप्रदर्शनम् । ज्वरोपद्रवतीक्ष्णत्वादिकं सामज्वराकृतिः । आकृतिर्लक्षणमिति पर्यायौ ॥

युक्तं लंघितलिङ्गैस्तु तं पेयाभिरुपाचरेत् ।
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥
षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् ।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥
ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ।
वातमूत्रपुरीषाणां दोषाणां चानुलोमकाः ॥
स्वेदनाय द्रवोष्णत्वान्मृदुत्वात्तृट्प्रशान्तये ।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥
ज्वरघ्ना ज्वरसात्म्यत्वात्तस्मात्पेयाभिरादितः
उपक्रमेज्ज्वरान् सर्वान्हते मद्यसमुत्थितान् ॥

तं च ज्वरितं चशब्दाभिहितेन सामज्वरलिङ्गविपर्यासेन द्विविधोपक्रमणीयोक्तैश्च

लंघितालिङ्गैर्युक्तं ज्ञात्वा पेयाभिरुपाचरेत् । किंभूताभिराह † यथास्वौषधसिद्धाभिर्यस्मिन् ज्वरे यदेव कषायकल्पनौषधमुक्तं तेनौषधेन साधिताभिः । मण्डः पूर्वो यासां ताभिर्लंघने कृते मण्डस्ततः पेया । कियत्कालमित्याह । आदितो ज्वरारम्भदिनात् प्रभृति षडहं यावत् । यत्र तु षडहात् पूर्वं लंघनलिङ्गाभावात् पेया न प्रयुक्ता तत्र यदा प्रयुज्यते तदा तासां ज्वरमार्दवोत्पत्तिर्यावत् प्रयोगः । सुबोधम् ॥

† अथवा यवागूनां प्रतिस्वं संस्कारक पिप्पलीनागरादिकमिति जर्जटः ॥

प्राग्लाजपेयां सुजरां सशुण्ठीधान्यपिप्पलीम् ।
ससैन्धवां तथाम्लार्थी तां पिबेत् सहडाडिमाम्
सृष्टविड्बहुपित्तो वा सशुण्ठीमाक्षिकां हिमाम्।
वस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधिताम्
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ।
सिद्धां ज्वरातिसार्यम्लां पेयां दीपनपाचनीम्
ह्रस्वेनपञ्चमूलेन हिकारुक्श्वासकासवान् ।
पञ्चमूलेन महता कफार्तो यवसाधिताम् ॥
विबद्धवर्चाः सयवां पिप्पल्यामलकैः कृताम् ।
यवागूं सर्पिषा भृष्टां मलदोषानुलोमनीम् ॥
चविकापिप्पलीमूलद्राक्षामलकनागरैः ।
कोष्ठे विबद्धे सरुजि पिबेत्तु परिकर्तिनि ॥
कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृताम् ।
अस्वेदनिद्रस्तृष्णार्तः सितामलकनागरैः ॥
सिताबदरमृद्वीकाशारिवामुस्तचन्दनैः ।
तृष्णाच्छर्दिपरीदाहज्वरघ्नीं क्षौद्रसंयुताम् ॥
कुर्यात् पेयौषधैरेव रसयूषादिकानपि ।

यदा पेयानामवसरस्तदा मण्डादनु सुजरत्वाल्ला*जपेयां पिबेत् । ततस्तण्डुलपेयां सैन्धवलाजपेयां वा । अम्लार्थीग्रहणेन कुर्वते हि रुचिं दोषा इति स्मार्यते । न स्वर्थितामात्रे प्रयोगः । सर्वासां च पेयानां साधनजलसंस्कारकारी दोषाद्यपेक्षा चौषधमात्रा । अन्ये पठन्ति "यवागूरसयूषेषु रसाळापानकादिषु । द्रव्यमात्रां प्रयुञ्जीत लोकसिद्धां यथार्हतः । अथवा यावता व्याप्निनोति स्याद्भेषजेन तु" । सुबोधम् । यवसाधिता यस्यां तण्डुला न प्रविशन्ति । सयवा यत्र स्तोकं यवानाम् । परिकर्तिनि कोष्ठे कोलादिभिः । श्रीफलं बिल्वम् ।

* प्राग्लाजपेयां सुजरामिति श्लेष्मण्येषा प्रथमा । अम्लाभिलाषी तामेव डाडिमाम्ला मिल्येषा वाते द्वितीया सृष्टविड्बहुपित्तोविल्येषातृतीया पित्ते अत्र नागरं मधुरपाकित्वात् पित्तेन विरुध्यते । आमपाचनार्थमिष्यत एव । शेषाणां विषयनिर्देशस्तु शास्त्रस्यकर्त्राकृत एव इति जर्जटः ॥

मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे ॥
ग्रीष्मे तयोर्वाधिकयोस्तृट्च्छर्दिर्दाहपीडिते ।
ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति—

मद्योद्भवादिके विषये पेयामाचार्या नेच्छन्ति । मद्यनित्ये पुरुषे । तयोरित्यनन्तरश्रुतयोः पित्तश्लेष्मणोः । ग्रीष्मकाले वृद्धयोर्वेति समुच्चये । नेच्छन्तीत्यनेनानुपयुज्यमाने युक्तिविशेषतैवागमस्य प्रदर्शिता ॥

—तेषु तु ॥

द्राक्षाडाडिमकाष्मर्यपथ्या पल्लिपरूषकैः ।
समधूकैः सबदरैः सक्षौद्रान् ससितोपलान् ॥
ज्वरघ्नैस्तोयमृदितैरद्भिर्वा लाजतर्पणान् ।
पिबेत् सुसूक्ष्मरजसस्ततो जीर्णे तु तर्पणे ॥
यवाग्वां वौदनं क्षुद्वानश्नीयाद्भृष्टतण्डुलम् ।
दकलावणिकैर्यूषै रसैर्वा मुद्गलावजैः ॥
इत्ययं षडहो नेयो बलं दोषं च रक्षता ।

तेषु तु मद्योद्भवादिषु पेयाप्रसङ्गे लाजतर्पणान् पिबेत् । तर्पणाः सक्तवः केन पिबेदाह । ज्वरापहैर्द्राक्षाडाडिमादिभिस्तोयमृदितैर्यथायोग्यमथवा केवलाभिरेवाद्भिः । किंभूतानाह सशर्कराक्षौद्रान । तथासु सूक्ष्मरजसः वस्त्रतितऊवारितान् । ततः पीत्वा तदहरेव तर्पणे जीर्णे यवाग्वां वा स्वविषयप्रयुक्तायां तदहरेव जीर्णायां यदा क्षुद्वान भवति तदा भृष्टतण्डुलकृतमोदनमद्यात् । केनेत्याह दकलावणिकैर्यूषैर्वा मुद्गलावाभ्यां वा रसैः । इत्यनेन पेयादिक्रमेणायंलंघितोत्तरषडह आतुरेण बलं देहस्य दोषं च क्षयवृद्धितो रक्षता नेयः ॥

ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते ॥
कषायो दोषशेषस्य † पाचनः शमनोऽथवा ।

ततः पेयाक्रमादनन्तरं लंघनस्वेदनकालयवागूभिर्दोषेषु ज्वरारम्भकेषु पक्वेषु दोषशेषस्य पाचनो वा शमनो वा कषायः पञ्चविधकल्पनः प्रशस्यते । कषाय इति पाकेनोपलब्धत्वादौषधस्य संज्ञा ॥

†लघनाम्बुयवागूभिर्यदा दोषो न पच्यते । तदा तं मुखवैरस्य तृष्णारोचकनाशनैः कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः स मुपाचरेत् । पाचनीयविषयोयम् । संशमनीयविषयश्च । मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च पक्वं दोषं विजानीयाद्यदादेयं तदौषधम । तस्मात् संशमनीयकालोयमिति जर्जटः ॥

तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे॥
पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते ।
नवज्वरे मलस्तम्भात् कषायो विषमज्वरान् ॥
कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि ।
न च्यवन्ते न पच्यन्ते कषायस्तम्भिता मलाः
तिर्यग्गता विमार्गा वा वर्धयन्त्यपि च ज्वरम् ।
बद्धामकफवातत्वाच्छूलानाहादिकानपि ॥

स च कषायस्तिक्तरसः पित्ते विशेषेण योज्यः । विशेषग्रहणात् कफेऽपि योज्य इति लभ्यते । कटुकश्च कफ एव योज्यः । स च कषायः कषायो रसेन पित्तश्लेष्महरोऽपि सन् नवज्वरे न शस्यते । तत्र हि नवज्वरे कषायो मलानां स्तम्भात् बहिर्गमनपाचनाभावेन तिर्यग्गमनविमार्गगमनाभ्यां यथासंप्राप्तिविषमज्वरानरुच्यादीनपि करोति । कषायरसस्तम्भिता मलाः न च्यवन्ते नाप्यन्तः पच्यन्ते प्रत्युत तिर्यक्स्रोतस्सु विपरीतं वा मार्गेषु गमनात् ज्वरं वर्धयन्ति । बद्धामादित्वाच्च कषायो यथासंप्राप्ति शूलादिकार्यपि भवतीति तिर्यग्गमनेन विमार्गगमनेन च विषमज्वरस्य स्वरूपं प्रदर्शितं भवति । नवतायां त्वतीतायां हरी-

तक्यादेः प्रयोगो दृष्टः । एवं षडहादौषधयोजनम् ।

सप्ताहादौषधं केचिदाहुरन्ये दशाहतः ।
केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ॥

केचिदाचार्याः सप्ताहादौषधमाहुः । अन्ये तु दशाहात् । केचित्त्वेवमाहुः यथा- लंघनादनन्तरं यदौषधमुपयुज्यते तदा येन लघ्वन्नं भुक्तं तस्यैव योज्यम् । पक्षत्रयेऽपि समानं योज्यमामोल्बणेत्वौषधं नेति । केवलं केषाञ्चित् षडहमामोल्बणत्वं केषाञ्चित् सप्ताहं केषाञ्चिद्दशाहमिति ॥

आमोल्बणे न योज्यमित्यत्र हेतुरुच्यते॥

तीव्रज्वरपरीतस्य दोषवेगोदये यतः ।
दोषेऽथवातिनिचिते तन्द्रास्तैमित्यकारिणि ॥
अपच्यमानं भेषज्यं भूयो ज्वलयति ज्वरम् ।

यतो यस्मात्तीव्रज्वरपरीतस्य दोषवेगोदये सति प्रयुक्तमौषधमत एवापच्यमानं भूयो ज्वरं ज्वलयति । अथवा नवज्वरेऽतिनिचिते दोषे तन्द्रास्तैमित्यकारिणि औषधं प्रयुक्तं भूयो ज्वरं ज्वलयति ॥

यदा ज्वरो मृदुर्देहो लघुः प्रचलिता मलाः ॥
अचिरज्वरितस्यापि योजयेद्भेषजं तदा ।

यदा मृदुर्ज्वरो देहश्च लघुर्मलाश्चलिता न तु स्तिमितास्तदा अचिरज्वरितस्यापि भेषजं योजयेत् । तेनैतदुक्तम् । यद्यपि पक्षत्रयं प्रदर्शितं तथाप्येवमेवावगन्तव्यम् । यस्य ज्वरस्य तीव्रत्वं प्राप्तस्य च लङ्घनस्यायोजनाद्दोषस्यातिवृद्धत्वं सामत्वं च तत्रावश्यमौषधं न योज्यम् । एतद्विपर्यये तु योज्यमेव न तु षडहादिकमपेक्षणीयमिति ॥

मुस्तया पर्पटं युक्तं शुण्ठ्या दुस्पर्शयापि वा॥
पाक्यं शीतकषायं वा पाठोशीरं सवाळकम् ।
पिबेत्तद्वच्च भूनिम्बगुळूचीमुस्तनागरम् ॥
यथायोगमिमे योज्याः कषाया दोषपाचनाः ।
ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः ॥
पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः ।
जयन्त्याममतीसारं ज्वरं च समहौषधाः ॥

मुस्तयेत्यादिना तदेवौषधमुच्यते । एवं दोषादिविशेषापेक्षया पर्पटं कदाचिन्मुस्तया युक्तं कदाचिच्छुण्ठ्या कदाचिद्दुरालभया । पाठादित्रयं शृतं वा शीतं वा । भूनिम्बादिचतुष्टयं तद्वच्छृतं वा शीतं वा । इमे च मुस्तापर्पटकादयः कषायाः नियतानियतकल्पना † यथायोगं दोषाद्यपेक्षया योगानतिक्रमेण योज्याः एते च ज्वरादिनाशनाः पाठादयः सनागरा आमादिकं ज्वरिणो जयन्ति यथेच्छकल्पनाप्रयुक्ता वातपित्तश्लेष्मणि ॥

† यथायोगमित्यत्र जर्जटः—। पाक्यं शीतकषायं वा मुस्तापर्पटकं पिबेत् । पाक्यं क्वाथ्यं शीतकषायमनुत्कथितमेवोष्णोदके संक्षुद्य द्रव्यं यद्रात्रिपर्युषितं पीयते तत् केवलपित्ते । पैत्तिके च सनागरं पर्पटकं मन्दाग्निः । पित्तकफप्राये सदुरालभं पर्पटकं दुरालभापित्तश्लेष्मोपशमनानामित्याम्नानात् ।। दाहबहुले पाठोशीरं सवाळकम् । शीतप्राये भूनिम्बगुळूचीमुस्तनागरमिति । अन्ये व्याख्यानयन्ति यद्याप्यमी सर्वयौगिकाः कुतः व्याधिप्रत्यनीकत्वात् यथा कुष्ठे खादिरंग्रहण्यां तक्रं प्रमेहे हरिद्रेति ॥

दुरालभामृताम्रुस्तानागरं वातजे ज्वरे ।
अथवा पिप्पलीमूलगुळूचीविश्वभेषजम् ॥
कनीयः पञ्चमूलं च पित्ते क्षौद्रसमन्विताः ।
कलिङ्गमुस्तकटुका मुस्तापर्पटकं तथा ॥
सधन्वयाषभूनिम्बं वत्सकाद्यो गणः कफे ।
अथवा वृषगाङ्गेयी शृंङ्गिवेरदुरालभाः ॥
रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनम् ।
अभयापिप्पलीमूलशम्याककटुकाघनम् ॥

दुरालभादिकं वातज्वरे । पिप्पलीमूलादित्रयं वातज्वर एव । केवलमेव ह्रस्वपञ्चमूलकं वाते । कलिङ्गादित्रयं सक्षौद्रं पित्ते मुस्तापर्पटकं दुरालभाकिराततिक्तसंयुक्तं पित्ते । कफे वत्सकाद्यो गणः । अथवा वृषादयः । गाङ्गेयी मुस्ता । रुगादियुक्ते वातश्लेष्मज्वरे अभयादिकं तच्च दीपनं पाचनं च ॥

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ।
पटोलं शारिबा मुस्ता पाठा कटुकरोहिणी ॥
पटोलनिम्बत्रिफलामृद्वीकामुस्तवत्सकाः ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥
धात्री मुस्तामृताक्षौद्रमर्धश्लोकसमापनाः ।
पञ्चैते सन्ततादीनां पञ्चानां शमना मताः ॥

पटोलेन्द्रयवारिष्टभद्रमुस्तामृताद्वयम् ।
शारिबाद्वितयं पाठा त्रायन्ती कटुरोहिणी ॥
पटोलारिष्टमृद्वीकाशम्याकत्रिफलावृषम् ।
चन्दनोशीरधान्याब्दगुळूचीविश्वभेषजम्
देवदारुस्थिराशुण्ठीवाशाधात्रीहरीतकीः ।
पञ्च पञ्च ज्वरान् घ्नन्ति योगा मधुसितोत्कटाः

कलिङ्गादिभिः पञ्चभिरर्द्धश्लोकैः पञ्च यथायोग्यकल्पनाः कषायाः यथासंख्येन पञ्चानां संततादीनां शमना मता आचार्याणाम् । एवमेव पटोलादिभिर्योगयोग्यकल्पना मधुसितोत्कटाः प्रभूतमधुसिताः ॥

सगुडाः शारिबाद्राक्षाशताह्वाकणरेणुकाः ।
काश्मर्यशारिबाद्राक्षात्रायमाणामृतागुडाः ॥
शतपुष्पावचाकुष्ठदेवदारुहरेणुकाः ।
शर्करामधुसंयुक्ताः समांसीमुस्तधान्यकाः ॥
कृष्णापुनर्नवाद्राक्षाशताह्वागुडशारिबाः ।
शालिपर्णीबलाद्राक्षाशारिबाच्छिन्नसंभवाः ॥
आरग्वधो बला रास्ना काश्मर्यं मधुकं गुडः ।
शतावरीच्छिन्नरुहास्वरसो वा गुडान्वितः ॥
सकृष्णाजीरकसितानागरश्चामृतारसः ।
वातज्वरं जयन्त्याशु केवलो वामृतारसः ॥
भार्ङ्गीसरळगाङ्गेयीदारुकुष्ठैलवालुकम् ।
कोष्णं घृतगुडोपेतं पिबेद्वा वातजे ज्वरे ॥

सगुडाइत्यादिना नव योगा वातज्वरे नियताः ।नियतकल्पनाः । तत्र शारिबादयो रेणुकान्ताः सगुडाः । रेणुका हरेणुका । काश्मर्यादयोऽमृतान्ताः सगुडाः । शतपुष्पादयः समांसीमुस्तधान्यकाः शर्करामधुसंयुक्ताः। कृष्णादयः शारिबान्ताः सालपर्ण्यादयच्छिन्नसंभवान्ताः । आरग्वधादिकः सगुडः । शतावरीगुळूच्योः स्वरसः सगुडः । गुळूचीरसः सकृष्णाजीरकादिः । केवलश्च गुळूचीरसः । सर्वत्र च मधुगुडशर्कराणां व्याप्ति-

जनिका माता । भाङ्गर्यादिर्घृतगुळसंयुक्तो वातज्वरे । गाङ्गेयी मुस्ता । एलावालुकमैलेयं सुगन्धि हरिवालुकमिति पर्यायः ॥

पटोलादिगुळूच्यादी सूत्रोक्तौ पित्तजे ज्वरे ।
अञ्जनादिः सकाश्मर्यः शारिबादिः सशर्करः
सितामधुककाश्मर्यशीतोशीरपरूषकम् ।
गुळूचीशारिबालोद्ध्रकमलोत्पलशर्कराः ॥
द्राक्षाभयातिक्तघनशम्याकफलपर्पटम् ।
श्यामापर्पटदुःस्पर्शातिक्तातिक्तसितावृषाः ॥
शर्करातिक्तकटुकात्रायमाणाविभीतकम् ।
गुळूच्यामलकैर्युक्तः केवलो वापि पर्पटः ॥
कषायो वा हिमस्तिक्ताद्राक्षामधुकनिंबजः ।
पित्तज्वरघ्नी कटुका श्लक्ष्णपिष्टा सशर्करा ॥

पित्तज्वरे पटोलादिगणो गुळूच्यादिर्वा सकाश्मर्योऽञ्जनादिः । सशर्करः शारिबादिः । पञ्चभिरर्द्धश्लोकैः सितेत्यादिना यथायोग्यकल्पनम् । सुबोधम् । शीतश्चन्दनम् । तिक्तः किराततिक्तः । घनो मुस्तः । शम्याक आरग्वधः । तस्य फलम् । गुळूच्यामलकयुक्तः पर्पटः केवलो वा । तिक्तादिजो वा शीतः कषाय इति पित्तजे ज्वरे । कटुकाशर्कराचूर्णं च पित्तज्वरे ॥

कफजेऽतिविषोशीरपटोलमरिचक्षपाः ।
सभूर्वेन्द्रयवद्वीपिकुष्ठनिम्बवचागुडाः ॥
सप्तच्छदामृतानिम्बस्फूर्जातं माक्षिकान्वितम् ।
निशात्रिकटुकं तिक्तानागपुष्पकलिङ्गकाः ॥
शारिबातिविषाकुष्ठदुःस्पर्शामुस्तगुग्गुलुः ।
परूषं त्रिफला तिक्ता बीजं वृषकजं घनम् ॥
नागरत्रिफलामुस्तामूर्वापाठाः समाक्षिकाः ।

अतिविषादयो वचान्ताः सगुडाः कफे । क्षपा हरिद्राः । द्वीपिः चित्रकः । सप्तच्छदादिकं समाक्षिकम् । सप्तच्छदः सप्तपर्णः । स्फूर्जातं काकतिक्तः । निशाशारिबापरूषनागराद्याश्चत्वारः कषायाः समाक्षिकाः । निशा हरिद्रा । तिक्ता कटुका । नागपुष्पं नागकेसरम् । कलिङ्गक इन्द्रयवः । वृषकजं बीजं शाकबीजमिति कफज्वरे ॥

संसर्गसन्निपातेषु मिश्रानेतान् विकल्पयेत् ॥

एते च योगा दोषविशेष उक्तास्ते सदृशे दोषे युज्यन्ते । अपि त्वान्तरविशेषावच्छिन्ने प्रयोगावयवसमुदायशक्त्यानुगुण्येन । तत्र योगमिति करणविधिः कर्माभ्यासादवभिद्यते । एतांश्च कषायान् ययोरेव संसर्गः तयोरेव उक्तान् मिश्रीभावेन कल्पयेत् ॥

गोकण्टकबलादर्भाः ससिता वातपित्तजे ।
द्राक्षामलकभूनिम्बाः सगुळूचीशटीगुडाः ॥
त्रायन्ती शारिबाद्राक्षा काश्मर्यच्छिन्नजागुडाः
द्राक्षामस्रूरत्रायन्तीगुळूचीशारिबाबलाः ॥
द्राक्षामधूकमधुकलोद्ध्रकाश्मर्यशारिबाः ।
मुस्तामलकह्रीबेरपत्मकेसरपत्मकम् ॥
मृणालचन्दनोशीरनीलोत्पलपरूषकम् ।
फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः॥

युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ।
ज्वरं मदात्ययं छर्दिं मूर्छां दाहं श्रमं भ्रमम्॥
ऊर्ध्वगं रक्तपित्तं च पिपासां कामिलामपि ।

गोकण्टकादि सशर्करं वातपित्तजे । द्राक्षाद्यर्धश्लोकैर्वातपित्तजे कषाययोग्ये त्रयः कषायाः । द्राक्षामधूकादिना सार्धेन श्लोकेन फाण्टः शीतकषायो वा मध्वादिभिर्युक्तो जातीपुष्पाधिवासितश्चानिलपित्तज्वरमूर्छादिकं जयति । ह्रीवेरं वाळकम् ।

कफवाते वचातिक्तापाठारग्वधवत्सकाः ॥
पिप्पलीचूर्णयुक्तो वा क्वाथः छिन्नोद्भवोद्भवः।
व्याघ्रीशुण्ठ्यमृताक्वाथः पिप्पलीचूर्णसंयुतः ॥
वातश्लेष्मज्वरश्वासकासपीनसशूलजित् ।
पथ्या कुस्तुम्बरीमुस्ताशुण्ठीकत्तृणपर्पटम् ॥
सकट्फलवचाभार्ङ्गीदेवाह्वं मधुहिङ्गुमत् ।
कफवातज्वरष्ठीवकुक्षिहृत्पार्श्ववेदनाः ॥
कण्ठामयास्यश्वयथुकासश्वासान्नियच्छति ।

वचादयः समस्ताः कफवातज्वरे । तत्रैव गुळूचीक्वाथः पिप्पलीमूलचूर्णेन दोषाद्यपेक्षमात्रेण युक्तः व्याघ्र्यादिक्वाथस्तद्वद्वातश्लेष्मज्वरादिजित् । शूलं शिरसि । पथ्यादिको माक्षिकहिङ्गुयुक्तः कफवातज्वरादिकं नियच्छति ॥

आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत् ॥
तथा तिक्तावृषोशीरत्रायन्तीत्रिफलामृताः ।
पटोलातिविषानिम्बमूर्वाधन्वयवासकाः ॥
वृषपुष्पच्छदरसः शर्करामाक्षिकान्वितः ।
पित्तश्लेष्मज्वरं हन्ति सासृक्पित्तं सकामिलम्
अनन्ताविश्वभेषज्यकटुकातोयतोयदाः ।
ज्वरतृड्भ्रमसंमोहधूमकाम्लकनाशनाः ॥

आरग्वधादिगणो माक्षिकयुक्तः कफपित्तज्वरे । तिक्तादिधन्वयवासान्तं तथा सक्षौद्रमेवेत्यर्थः । वृषस्य पुष्पपत्राभ्यां रसो यथोक्तगुणः । अनन्तादयो ज्वरादिनाशनाः । अनन्ता मूर्वा । तोयं वाळकम् । तोयदो मुस्तः । धूमकाम्लकौ दोषभेदीये प्रदर्शितौ ॥

सन्निपातज्वरे व्याघ्रीदेवदारुनिशाद्वयम् ।
पटोलपत्रनिम्बत्वक् त्रिफलाकटुकायुतम् ॥
मुस्तापर्पटकं पथ्या मृद्वीका कटुरोहिणी ।
त्रायन्तीक०तन्मूलद्राक्षापथ्यामधूलिकाः ॥
त्रिफलोशीरषड्ग्रन्थायष्टीमधुबलाघनाः ।
नागरं पौष्करं मूलं गुळूची कण्टकारिका ॥
सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे ।
मधूकपुष्पमृद्वीका त्रायमाणापरूषकम् ॥
सोशीरतिक्ता त्रिफलाकाश्मर्यं कल्पयेद्धिमम् ।
कषायं तं पिबन् काले ज्वरान् सर्वानपोहति॥
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ।
बद्धविद् कटुकाद्राक्षात्रायन्तीत्रिफलागुळान् ॥

सन्निपातज्वरे व्याघ्र्यादिः कटुकान्तः । मुस्ताद्यर्धश्लोकैस्त्रयो योगा यथायोग्यं सन्निपाते । नागरादि वातश्लेष्मोत्तरे हीनपित्ते

सन्निपाते । मधूकपुष्पादि शीतकषायं विकल्प्य कास्मिंश्चित् काले ज्वरे प्रयुक्तं सर्वज्वरहरम् ।तद्वदेव जात्यादि । तद्वद्दुरालभा । यस्तु ज्वरी बद्धविट्तद्विषये कटुकादीन् पिबेत इति कषायाः ॥

जीर्णौषधोऽन्नं पेयाद्यमाचरेच्छ्लेष्मवान्न तु ।
पेया कफं वर्धयति पङ्कं पांसुषु वृष्टिवत् ॥

अस्मिंश्चौषधे निरन्नप्रयुक्ते तदहरेव पेयाविलेप्यादिकमन्नमाचरेत् । किं सर्व इत्याह श्लेष्मवान्न तु । अनेन पेयाद्यन्ने प्रतिषेधः । अत्र हेतुः पेया कफं वर्धयतीत्यादिः ।

एवं प्रतिषिद्धायां श्लेष्मवतः पेयायां किं योज्यमित्याह ॥

श्लेष्माभिष्यण्णदेहानामतः प्रागपि योजयेत् ।
यूषान् कुलत्थचणककळायादिकृतान् लघून् ॥
रूक्षांस्तिक्तरसोपेतान हृद्यान् रुचिकरान् पटून्

श्लेष्मेत्यादि । अभिष्यण्णशब्देनोक्लिष्टपर्यायेण कफे पाचनत्वेन पेयानां विधाने विरोधं निर्वर्तयति । प्रागपीति न केवलमौषधे जीर्णे पेयादिप्रतिषेधो यावत् कफाधिके लङ्घितलिङ्गादनन्तरमपि यूषानेवोदनेन भृष्टतण्डुलेन सह योजयेत् । रूक्षानिति विना स्नेहेन संस्कृतान् । तिक्तो रसः ज्वरघ्नानां कषायाणां यथायोग्यान्यतमद्रव्याश्रयः ॥

रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरेहिताः
श्लेष्मोत्तरे वीततुषास्तथा वाट्यकृता यवाः ।
ओदनस्तैः स्रुतो द्वित्रिः प्रयोक्तव्यो यथायथम्
दोषदूष्यादिबलतो ज्वरघ्नक्वाथसाधितः ।

ज्वरे चान्नं जीर्णारक्ताद्याः शालयः षष्टिकाश्च पाठक्रमेण हिताः । श्लेष्मोत्तरे तु यवा अपि । तैश्च शालिभिर्दोषदूष्याद्यपेक्षया ज्वरघ्नान्तरोक्तक्वाथसाधितः सिद्ध ओदनः द्वौ वारौ त्रीन् वारान् वा प्रक्षाल्य स्रुतो यथायथं ज्वरे प्रयोक्तव्यः ॥

मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः ॥
कारवेल्लककर्कोटबालमूलकपर्पटैः ।
वार्ताकनिम्बकुसुमपटोलफलपल्लवैः ॥
अत्यन्तलघुभिर्मांसैर्जाङ्गलैश्च हिता रसाः ।
व्याघ्रीपरूषतकारीद्राक्षामलकदाडिमैः ॥
संस्कृताः पिप्पलीशुण्ठीधान्यजीरकसैन्धवैः ।
सितामधुभ्यां प्रायेण संयुता वा कृताकृताः ॥
अनम्लतक्रसिद्धानि रुच्यानि व्यञ्जनानि च
अच्छान्यनलसंपन्नान्यनुपानेऽपि योजयेत् ॥
तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः

मुद्गाद्यैरित्यत्र लघुग्रहणेन राजमाषादीनां गुरूणां प्रतिषेधः । कारवेल्लादिभिः पृथगतिलघुभिश्च जाङ्गलानां मांसैस्तद्योग्यज्वरे रसा हिताः । ते च यूषरसा यथाविषयं व्याघ्र्यादिभिः सितामधुभ्यां च संस्कृता वा संयुक्ता वा कृता वाप्यकृता वा नात्यम्लेन च तक्रेणासिद्धानि व्यञ्जनान्यन्ने न सह योजयेत् । तान्येव च यूषरसादी-

न्यनुपानेऽपि योजयेत् । सात्म्यापेक्षया च कथितशीतादिकमप्यनुपाने योजयेत् ॥

कषायपानपथ्यान्नैर्दशाह इति लङ्घिते ॥
सर्पिर्दद्यात् कफे मन्दे वातपित्तोत्तरे ज्वरे ।
पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा ॥
दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत् ।
लंघनादिक्रमं तत्र कुर्यादा कफसंक्षयात् ॥

अस्मिंश्च कषायान्ते लंघनक्रमे कृतेऽपि यदि ज्वरो न शान्तस्तत आदितो दशाहेऽतीते लंघनक्रमेण च कफे मन्दीभूते वातपित्ते च पूर्वं संप्राप्त्यभिमुखीभूते सम्प्रति लंघनेनैवाधिक्यमुपगतवति सर्पिर्दद्यात् । दशाहग्रहणमस्या यथोक्ताया ज्वरावस्थायास्तदा प्रायोभवत्वादुपलक्षणार्थम् । तत्पूर्वेष्वहस्सु सर्पिःप्रतिषेधार्थं च । तच्च सर्पिर्ज्वरे दोषेषु पक्वेषु सत्सूपयुक्तममृतं भवति । अन्यथामेष्वपक्वेष्वतीतेऽपि दशाहे प्रयुक्तं विषोपमं सत् ज्वरोपद्रववृद्धिकृत्स्यात् । उपद्रवाः श्वासादय उक्ताः । ननु यदि सर्पिरत्र प्रतिषिद्धं किमन्यद्योज्यमित्याह लंघनादिक्रममिति । तस्य च क्रमस्य कफसंक्षयः अवधिः ॥

सज्वरं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ।
श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा ॥
यथोचितेऽथवा काले दोषसात्म्यानुरोधतः ।
प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते ॥

इति ज्वरचिकित्सितं नाम प्रथमोऽध्यायः ।

सज्वरमित्यादिना सर्वज्वरावस्थासु भोजनकालं नियमयति । सुबोधम् । यस्त्वल्पाग्निः स प्रागेव भुञ्जानः अजीर्णेन न पीड्यते । प्रागेव प्रथमदिने । एष कषायान्तो लंघनक्रमः सामे तरुण एव ज्वरे साधुरित्यध्यायः समाप्यते ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चिकित्सिते प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ।

---

अथातो जीर्णज्वरचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

देहधात्वबलत्वेन ज्वरो जीर्णोऽनुवर्तते ।

देहधात्वित्यादिना प्रयुक्तेऽपि विषये लंघनक्रमे ज्वरानुवृत्तेर्हेतुरुच्यते । देहस्याबलत्वं धातूनां चापरिपोषो ज्वरानुवृत्तिहेतुः । तस्यां च जीर्णतायां प्रथमं कषायपानं पश्चात्सर्पिरुपाक्षिप्तं पूर्वाध्याये । तस्यैवात्र विशेषेण विषयप्रदर्शनं क्रियते तस्मिन् जीर्णज्वरे सर्पिः शस्यते । कथमित्याह ॥

रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च ॥
वमनस्वेदकालाम्बुकषायलघुभोजनैः ।

यः स्यादतिबलो धातुः सहचारी सदागतिः
तस्य संशमनं सर्पिर्दीप्तस्येवाम्बु वेश्मनः ॥
वातपित्तजितामग्र्यं संस्कारमनुरुध्यते ।
सुतरां तद्रूध्यतो दद्याद्यथास्वौषधसाधितम् ॥

रूक्षमित्यादि । तेजो हि ज्वरकृत् पित्ताख्यं तच्च तेजस्त्वादेव रूक्षम् । तेन च तेजसा रूक्षितस्य सतः पुरुषस्य वमनादिभिरपतर्पणैर्यो धातुः सदागत्याख्यः प्रभञ्जनापरनामा तेन सहचार्यतिबलः स्यात् । तस्य सदागतेस्तेजसः सहचारिणः सर्पिः संशमनं भवति । यथा दीप्तस्य वेश्मनोऽम्बु । तच्च सर्पिर्वातपित्तजितामौषधानामग्र्यम् । तथा संस्कारमनुरुध्यते येनैव संस्क्रियते तद्गुणैः सहात्मीयकार्यकरं भवतीत्यर्थः । यतश्च संस्कारमनुरुध्यतेऽतस्तत्सुतरां यथास्वौषधसाधितं ज्वरिणे दद्यात् । वातान्वये तदौषधैः सिद्धमेवं पित्तकफयोरपि विज्ञेयम् ॥

तच्च सिद्धं सर्पिस्त्रयाणामपि दोषाणां पथ्यमिति प्रदर्शनार्थमाह ॥

विपरीतं ज्वरोष्माणं जयेत् पित्तं च शैत्यतः।
स्नेहाद्वातं घृतं तुल्यं योगसंस्कारतः कफम् ॥
पूर्वं कषायाः सघृताः सर्वे योज्या यथामलम्।
त्रिफलापिचुमन्दरवक्षधुकं बृहतीद्वयम् ॥
समसूरदलं क्राथः सघृतो ज्वरकासहा ।

विपरीतमित्यादि । ज्वरोष्माणं पित्तं च विपरीतं शैत्याज्जयेत् । वातं तु विपरीतं स्नेहाज्जयेत् । कफं पुनस्तुल्यमपि तन्नाशकद्रव्यसंयोगसंस्काराभ्यां जयेत् । अतो हेतोः पूर्वं मुस्तापर्पटकाद्याः कषाया यथादोषं सघृताः साज्या योज्याः । तेनैतदुक्तं भवति । दोषाद्यपेक्षया कदाचिदौषधैः सिद्धं सर्पिः पिबेत् । कदाचिदौषधानि सर्पिषा सहेति । सुबोधम् । सुयोज्यम् ॥

निदिग्धिकातामलकीत्रायमाणाकलिङ्गकैः ॥
कृष्णांशुमत्यतिविषाकटुकासेव्यचन्दनैः ।
धात्रीविल्वघनद्राक्षाशारिवाभिश्च साधितम् ॥
हन्ति सद्यो घृतं जीर्णज्वरं कासं हलीमकम् ।
अरुचिं विषमं वह्निं यक्ष्माणं च नवोत्थितम्॥

निदिग्धिकादिभिः साधितं घृतं सद्यो जीर्णज्वरादिकं हन्ति । कल्काच्चतुर्गुणश्च स्नेहः पलसंख्यया । स्नेहात्तोयं चतुर्गुणम् । एतच्च प्रमाणस्यानुक्तौ सर्वत्र स्नेहपाकेष्वपि विज्ञेयम् । तामलकी ताली । अंशुमती सालपर्णी । सेव्यमुशीरम् । वह्नेर्वैषम्यमुक्तलक्षणम् ॥

वाशागुडूचीत्रिफलात्रायमाणायवाषकात् ।
क्राथे क्षीरे च विपचेत् ज्वरघ्नं कल्कितैर्घृतम्॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः ।

वाशादीनां क्राथकल्पनया क्राथे स्नेहाच्चतुर्गुणे क्वाथसमे च क्षीरे पिप्पल्यादिभिश्च कल्कितैर्मानेन स्नेहाच्चतुर्थांशैर्ज्वरघ्नं घृतं पचेत् पूर्ववत् ॥

बलादुरालभामुस्तात्रायन्तीनिम्बपर्पटम् ॥

पञ्चमूलद्वयं यच्च क्काथयित्वा घृतं पचेत् ।
सक्षीरं कल्कितैर्द्राक्षामेदामलकपौष्करैः ॥
षटीतामलकीयुक्तैस्तच्च ज्वरहरं परम् ।
क्षयकासशिरःपार्श्वहृच्छूलांसाभितापनुत् ॥

बलादिक्काथेन द्राक्षादिकल्केन घृतं पचेत् । अत्र क्षीरं घृतसमम् । तच्च घृतं परं ज्वरहरं क्षयादिनुच्च ॥

कुलत्थकोलत्रिफलादशमूलयवान् पचेत् ।
द्विपलान् सलिलद्रोणे पूते पिष्टाक्षकान् क्षिपेत्
पञ्चकोलकसप्ताह्वयस्थानिम्बतुम्बुरून् ।
षटीपुष्करमूलार्कमूलप्रतिविषावचाः ॥
किराततिक्तकं हुस्तं कर्कटाख्यां दुरालभाम्।
नक्तमालमुभे पाठे कटुकाशिग्रुतेजनीः ॥
सोमवल्कद्विरजनीकण्टकीकण्टकारिकाः ।
पटोलहिङ्गुगोजिह्वाकेवुकं मदनाङ्कटा ॥
लवणानि पलांशानि क्षारानर्धपलोन्मितान् ।
प्रस्थं चाज्यस्य तत्सिद्धं दीपनं कफवातजित्
हृत्प्लीहग्रहणीगुल्मकासश्वासार्शसां हितम् ।
दीर्घज्वराभिभूतानां ज्वरिणाममृतोपमम् ॥

कुलत्थादिक्काथद्रव्यपलानि द्वात्रिंशत् । सलिलद्रोणः पलशतानि पञ्चद्वादशपलाधिकानि । क्कथितशेषं चतुर्थांशेन पलानां शतमष्टाविंशत्यधिकम् । अङ्कटान्तानि कार्षिकाणि । कण्टकी खदिरः । गोजिह्वा गोजी अङ्कटा बहुपत्रा च भूधात्री तामलक्यपि ॥

मञ्जिष्ठातिविषापथ्यावचानागररोहिणीः ॥
देवदारु हरिद्रां च द्रोणेऽपां पालिकान् पचेत्
क्काथेऽस्मिन् साधयेत् पिष्टैर्घृतप्रस्थं पिचून्मितैः॥
भृङ्गिबेरकणाहिङ्गुद्विक्षारपटुपञ्चकैः ।
तत्कफावृतसर्वोत्थज्वरिणाममृतोपमम् ॥
वर्ध्महिध्मारुचिश्वासकासपाण्डुविकारिणाम् ।
गलग्रह*प्रमेहार्शःप्लीहापस्मारशोफिनाम् ॥
उदावर्तपरीतानां मन्दाग्निकृमिकोष्ठिनाम् ।

* ग्रन्थि इति पठान्तरम् ॥

एवमेव मञ्जिष्ठाद्यम् । सुबोधम् । यत्र च सामान्येन क्काथशब्दस्तत्र क्काथं द्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितमित्येतदवगन्तव्यम् । तेन द्रव्यात् षोडशगुणं क्कथनजलम् । क्कथितशेषं चतुर्थांशं द्रव्याच्चतुर्गुणम् । पिचुः कर्षः ॥

गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः

गुडूच्याः स्वरसः स्नेहाच्चतुर्गुणः तस्या एव कल्कः स्नेहाच्चतुर्थांशः । एवं त्रिफलाया वृषस्य च वाच्यम् ॥

जीर्णे घृते च भुञ्जीत मृदुमांसरसौदनम् ॥
बलं ह्यलं दोषहरं परं तच्च बलप्रदम् ।
कफपित्तहरा मुद्गकारवेल्लादिजा रसाः ॥
प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे ।
शूलोदावर्तविष्टम्भजनना ज्वरवर्धनाः ।

यस्मिन् कस्मिंश्चित् घृते जीर्णे मृदु

मांसरसाशनं भुञ्जीत । यतस्तन्मांसरसाशनं परं बलप्रदं बलं च श्रेष्ठं दोषहरमौषधादितो यत एवमतः पूर्वोक्ताः कारवेल्लादिजा रसा ये पित्तश्लेष्महरास्ते जीर्णज्वरे वातोत्तरत्वान्न हिताः शूलादिजननाश्च ॥

न शाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनम् ।
शोधनार्हस्य वमनं प्रागुक्तं तस्य योजयेत् ॥
आमाशयगते दोषे बलिनः पालयन् बलम् ।

एवं च स्नेहयोजनेनापि यदि विषये प्रयुक्तेन ज्वरो न शाम्यति ततः शोधनार्हस्य गर्भिणीसुकुमाराद्यतिसार्यादिवर्जितस्य शोधनं योजयेत् । वमनं पूर्वोक्तपिप्पल्यादि यथायोगं योजयेत् । तच्च वमनं जीर्णज्वरिण आमाशयगते दोषे योज्यं बलिनश्च ॥

संतर्पणोत्थे वमनं पिप्पलीलवणाम्बुना ॥
शर्करामाक्षिकाम्भोभिर्दाहतृष्णोल्बणे ज्वरे ।

यश्च ज्वरः पूर्वं संतर्पणोत्थस्तत्र पिप्पलीलवणाम्बुनैव वमनं योज्यम् । दाहतृष्णोल्बणे पुनः सर्वं वमनं पित्तान्वयेन शर्करामाक्षिकोदकैरेव योज्यम् ॥

पक्वे तु शिथिले दोषे ज्वरे वा विषमद्यजे ॥
मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः ।
ससितामधुभिर्द्याद्व्योषाद्यं वा विरेचनम् ॥
द्राक्षाधात्रीरसं तद्वद्रसद्राक्षां वा हरीतकीम् ।
रसमामलकानां वा घृतभृष्टं ज्वरापहम् ॥
लिह्याद्वा त्रिवृतश्चूर्णं कृष्णात्रिफलयोस्तथा ।
सर्पिर्मधुभ्यां त्रिफलां पिबेद्राक्षारसेन वा ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत्
सघृतं त्रिफलाक्वाथं सर्पिषा वा विना श्रृतम् ।
पयोऽनुपानमुष्णं वा मृद्वीकास्वरसं पिबेत् ॥
विरिक्तानां च संसर्गी मण्डपूर्वा यथाक्रमम् ।

पक्वे तु दोषे शिथिले नातिलीने विरेचनं दद्यात् । तथा विषजे ज्वरे मद्यजे ज्वरे च सुतराम् । विषजो विषसंस्कारजः । किं विरेचनमित्याह । मोदकं त्रिफलादिभिः ससितामधुभिः । अथवा व्योषाद्यं मोदकं विरेचनकल्पपठितं व्योषत्रिजातकाम्भोदेत्यादिना । तथा द्राक्षामलकाभ्यां विमिश्रितं रसम् । सुबोधम । त्रिफला कृष्णमूलस्यैको योगः सर्पिर्मधुभ्याम् । तथा द्वितीयः त्रिफलाया द्राक्षारसेन पानम् । आरग्वधं क्षीरेण वा मृद्वीकारसेन वा पूर्वापेक्षया विकल्पः । सर्वयोगानां च दोषाद्यपेक्षया भिन्नविषयत्वम् । संसर्गी पेयादिक्रमः । अत्र मण्डः पूर्वं पश्चात् पेयादिः यथाक्रममग्न्युत्कर्षार्थम ।'

च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ॥
पक्वोऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः

यत्र तु ज्वरे संतापादुत्क्लेशेन मलः स्वयमूर्ध्वमधो वा बहिः प्रवर्तते तत्र तन्मलमुपेक्षेत न विधारयेदित्यर्थः । यतो दोषः

पक्कोऽपि कोष्ठे कृतास्पदः सन्नवश्यमेव विकारं कुर्यात् । तस्मादुपेक्षेत ॥

अतिप्रवर्तमानं वा पाचनयन् संग्रहं नयेत् ॥

अथवा अतिप्रवर्तमानं बलहान्यादिभयात् पाचयन् वैद्यो मलं दोषं संग्रहं नयेत् ॥

आमसंग्रहणे दोषा दोषोपक्रम ईरिताः ।

आमे च दोषे स्वयं प्रवर्तमाने संगृहीते ये दोषा उपद्रवा भवन्ति ते दोषोपक्रमणाध्याये विवृतास्ते हि कुर्वंत्ति रोगानुत्पादनिर्दिष्टानतिस्थौल्यादिकान् गदानित्यनेन ग्रन्थेनोदिता उक्ताः । एतच्च दोषहरणं विरेचनं जीर्णज्वरे पक्के दोषे योज्यम् ॥

पाययेद्दोषहरणं मोहादामज्वरे तु यः ॥
प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत् ।

यस्तु भिषङ्मूढो विरेचनमामज्वरे पाययेत स स्वयमनर्थकारी प्रसुप्तं कृष्णसर्पं कराग्रेणापि परामृशेत् ॥

ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥

एवं जीर्णे ज्वरेऽपि ज्वरक्षीणस्य न वमनं हितं नापि विरेचनम् । काममित्यङ्गीकरणे । तथाविधस्य क्षीणस्य शोधनसाध्यतायां पयसा निरूहैर्वा ज्वरैर्मलान् हरेत् ।

क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः ।
क्षीरं पित्तानिलार्तस्य पथ्यमप्यतिसारिणः ॥
तद्वपुर्लंघनोत्तप्तं प्लुष्टं वनमिवाग्निना ।
दिव्याम्बु जीवयेत्तस्य ज्वरं चाशु नियच्छति
संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा ॥
विभज्य काले युञ्जीत ज्वरिणं हन्त्यतोऽन्यथा

क्षीरोचितस्येत्यादिना पयसो विषयनिर्देशः । तत् क्षीरं लंघनोत्तप्तं वपुर्जीवयेत् । यथाग्निना प्लुष्टं वनं दिव्याम्बु जीवयेत् । तस्य च क्षीणस्य क्षीरं ज्वरमाशु नाशयति । तस्माद्यथायोगं क्षीरं काले विकल्प्य दोषादीन् युञ्जीत । अतोऽन्यथा विपरीते विषये प्रयुक्तं क्षीरं ज्वरिणं हन्ति ॥

पयः सशुण्ठीखर्जूरमृद्वीकाशर्कराघृतम् ॥
शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम् ।
तद्वद्द्राक्षाबलायष्टीशारिवाकणचन्दनैः ॥
चतुर्गुणेनाम्भसा वा पिप्पल्या वा शृतं पिबेत्

सशुण्ठ्यादिकं पयः शृतमनु च शीतं मधुयुक्तं च तृडादिनाशनम् । शुण्ठ्यादीनां परस्परसमानां नातिव्याप्तिः । द्राक्षादिभिः पयस्तद्वच्छृतं शीतं मधुयुक्तं तृडादिनाशनमिति । अथवा विकल्प्य केवलेनैव क्षीराच्चतुर्गुणेनैवाम्भसा सिद्धं पिबेत् । अथवा पिप्पल्यासिद्धम् ॥

कासाच्छ्वासाच्छिरश्शूलात् पार्श्वशूलाच्चिरज्वरात् ॥
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ।

शृतमेरण्डमूलेन बालाबिल्वेन वा ज्वरात् ॥
धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः ।
सरक्तपिच्छातिसृतेः सतृट्शूलप्रवाहिकात् ॥

पञ्चमूलशृतं पयः पीत्वा कासादिभ्यो मुच्यते । एरण्डमूलादिना शृतं पयः पीत्वा ज्वरान्मुच्यत इति संबन्धः । किंभूतादाह । विबद्धानिलवर्चसः सरक्तातिसृत्यादेश्च ॥

सिद्धं शुण्ठीबलाव्याघ्रीगोकण्टकगुळैः पयः ।
शोफमूत्रशकृद्वातविबन्धज्वरकासजित् ॥
वृश्चीवबिल्ववर्षाभूसाधितं ज्वरशोफनुत् ।
शिंशिपासारसिद्धं च क्षीरमाशु ज्वरापहम् ॥

शुण्ठ्यादिसिद्धं पयो ज्वरिणः शोफादिजित् । व्याघ्री कण्टकारिका । विकण्टको गोक्षुरकः । सुबोधम् । एका पुनर्नवा वृश्चीवो द्वितीया वर्षाभूः । सारः स्थिरमाभ्यन्तरं शिंशिपाया इति पय उक्तम् ॥

निरूहस्तु बलं वह्निं विज्वरत्वं मुदं रुचिम् ।
दोषे युक्तः करोत्याशु पक्वे पक्वाशयं गते ॥

निरूह उच्यते । पक्वे दोषे पक्वाशयगते च युक्तो निरूहो बलादिकमाशु करोति । तथैव विरेचनाद्गुणातिशय उच्यते ॥

पित्तं वा कफपित्तं वा पक्वाशयगतं हरेत् ।
स्रंसनं त्रीनपि मलान् वस्तिः पक्वाशयाश्रयान् ॥

स्रंसनं विरेचनम् । तद्यदि परं पक्वाशयगतं पित्तमेव हरेत् । कफपित्तमेव वा । वस्तिः पुनस्त्रीनपि वातादीन्मलान् पक्वाशयाश्रयान् हरेत् ॥

प्रक्षीणकफपित्तस्य त्रिकपृष्ठकटीग्रहे ।
दीप्ताग्नेर्बद्धशकृतः प्रयुञ्जीतानुवासनम् ॥

प्रक्षीण इत्यादिना प्रसङ्गेनानुवासनस्य स्नेहवस्तेर्ज्वरे विषयनिर्देशः क्रियते ॥

पटोलनिम्बच्छदनकटुकाचतुरङ्गुलैः ।
स्थिराबलागोक्षुरकमदनोशीरवाळकैः ॥
पयस्यर्धोदके क्वाथं क्षीरशेषं विमिश्रितम् ।
कल्कितैर्मुस्तमदनकृष्णामधुकवत्सकैः ॥
वस्तिं मधुघृताभ्यां च पीडयेज्ज्वरनाशनम् ।

पटोलेत्यादिना निरूहा उच्यन्ते । तत्र पटोलाद्यौषधानि समानि । तेभ्यश्चाष्टगुणं क्षीरं ग्राह्यं तावज्जलम् । द्रव्याच्चतुर्गुणस्य क्वथितशेषस्य ग्रहणे प्राप्ते बाधकवचनं क्षीरशेषमिति । कल्कसर्पिर्मधूनि च सर्वत्र चाष्टमं भागं कल्काद्भवति वा यथा नात्यच्छसान्द्रेत्यादिप्रकारेण । पटोलनिम्बयोः छदनं पत्रम् । चतुरङ्गुल आरग्वधः । स्थिरा सालपर्णी । कृष्णा पिप्पली ॥

चतस्रः पर्णिनीर्यष्टीफलोशीरनृपद्रुमान् ।
क्वाथयेत् कल्कयेद्यष्टीशताह्वाफलिनीफलम् ॥
मुस्तं च वस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः ।

पर्णिन्यादिक्वाथे कल्कादि वस्तिविधिप्रदर्शितम् । पर्णिन्यः सालपर्णी पृश्निपर्णी मुद्गपर्णी

माषपर्णी च । यष्टी मधुयष्टी । फलं मदनफलम् । नृपद्रुम आरग्वधः । शताह्वा शतपुष्पा । फलिनी गन्धाप्रियङ्गुः ॥

त्रायमाणामृतायष्टीमदनांशुमतीद्वयैः ॥
सबलाचन्दनद्वयैर्जाङ्गलैश्च मृगद्विजैः ।
क्वाथे कृते क्षिपेत् पिष्ट्वा फलयष्टीकणाघनम् ॥
स सद्यो ज्वरहा वस्तिः साज्यक्षौद्रोऽल्पसैन्धवः

त्रायमाणाद्यैरौषधैः सह जाङ्गलानां मृगाणां पक्षि[illegible]लाभं क्वाथसंस्कारकराः [illegible] मत्राः । शेषं पूर्ववत् । [illegible]द्वयं सालपर्णीपृश्निपर्ण्यौ । [illegible] । कणा पिप्पली । घनो मुस्तः ॥

आम्रादीनां त्वचं शंखं चन्दनं मधुकोत्पलम्
स्वर्णगैरिकमञ्जिष्ठामृणालाञ्जनपद्मकम् ॥
क्षीरेण कल्कितं वस्तिं शीतं समधुशर्करम् ।
दाहज्वरहरं दद्यात्सिद्धं तैश्चानुवासनम् ॥

आम्रादिकं क्षीरेण पिष्टं वस्तिः । आम्रादीन्यम्लानि फलानि । मधुकं मधुयष्टी । अञ्जनं सौवीरम् । तैरेवाम्रादिभिस्सिद्धं तैलमनुवासम् ॥

जीवन्तीं मदनं मेदां पिप्पलीं मधुकं वचाम् ।
ऋद्धिं रास्नां [illegible] [illegible]ल्वं शतपुष्पां शतावरीम्
पिष्ट्वा क्षीरं [illegible] [illegible]स्तैलं चैकत्र साधितम् ।
ज्वरेऽनुवासनं [illegible]त्तथा स्नेहं यथामलम् ॥

जीवन्त्याद्ये क्षीरजलसर्पिस्तैलानां समानम् । स्नेहाच्चतुर्थांशः पिष्टानाम् । तथा स्नेहं यथामलमित्यनेनैतदुच्यते । दोषमधिकं ज्वरे ज्ञात्वा कदाचित् सर्पिरधिकमत्र कुर्यात् कदाचित्तैलमिति ॥

चन्दनागरुकाष्मर्यपटोल*मदनोत्पलैः ।
पटोलारिष्टमदनगुडूचीमधुकैरपि ॥
ये च सिद्धिषु वक्ष्यन्ते वस्तयो ज्वरनाशनाः

* मधुक इति पाठान्तरम् ॥

चन्दनादिभिरपि साधितं तैलं ज्वरेऽनुवासनं दद्यादिति संबन्धः । पटोलादिभिरपि । सिद्धिषु वस्तिसिध्यध्याये च ज्वरनाशना वस्तयो वक्ष्यन्ते तान्यपि ज्वरे दद्यात् ॥

शिरोरुग्गौरवश्लेष्महरमिन्द्रियबोधनम् ॥
जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनम् ।
स्नैहिकं शून्यशिरसो दाहार्ते पित्तनाशनम् ॥

तथा जीर्णज्वरे अवस्थाविशेषज्ञो भिषग्विरेचनं नाम नस्यविधिप्रदर्शितं नस्यं दद्यात् । तद्धि जीर्णज्वरवतः शिरोरोगादिहरमिन्द्रियपाटवं रुचिं च करोति । यो हि जीर्णज्वरवान् श्लेष्मणः क्षीणत्वात् शून्यशिरास्तस्य स्नैहिकं नाम नस्यं दद्यात् । स्नैहिकं बृंहणम् । दाहेनार्ते पित्तनाशनं शमनं नस्यम् ॥

धूमगण्डूषकवलान् यथादोषं च कल्पयेत् ।
प्रतिश्यायास्यवैरस्यशिरःकण्ठामयापहान् ॥

तथा जीर्णज्वरे कुपितदोषापेक्षया धूमा-

दीनपि कल्पयेत् । ते हि तस्य प्रतिश्याद्यादिहराः ॥

अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम् ।
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत्

जीर्णज्वरेऽरुचौ मातुलुङ्गकेसरम् घृतसैन्धवयुक्तमास्येन धारयेत् । द्राक्षादिकल्कं वा ।

यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान ।
अभ्यङ्गालेपसेकादीन् ज्वरे जीर्णे त्वगाश्रिते ।
कुर्यादञ्जनधूपांश्च तथैवागन्तुजेऽपि तान ।

यश्च जीर्णो ज्वरस्त्वचमाश्रित्य वर्तते तत्राभ्यंगादीन् कुर्यात् । किंभूतानाह । यथोपशयसंस्पर्शान् य एव संस्पर्श उपशेते शीतो वा उष्णो वा तेन युक्तान् । तथा कदाचिच्छीतद्रव्यकल्पितात् कदाचिदुष्णद्रव्यकल्पितान् । अञ्जनधूपांश्च त्वगाश्रिते कुर्यात् । आगन्तुकेऽपि ज्वरे तथैवयथोपशयेत्यादिना तानित्यभ्यङ्गादीन् योजयेत् ॥

दाहे सहस्रधौतेन सर्पिषाभ्यङ्गमाचरेत् ॥
सूत्रोक्तैश्च गणैस्तैस्तैर्मधुराम्लकषायकैः ।
दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः ॥
शीतवीर्यैर्हिमस्पर्शैः क्राथकल्कीकृतैः पचेत् ।
तैलं सक्षीरमभ्यङ्गात्सद्यो दाहज्वरापहम् ॥

दाह इत्यादिना दाहज्वरचिकित्सा । सहस्रधौतं सर्पिर्यत्तापितं तापितं शीतोदकेन शतशः स्त्यानीक्रियते । सूत्रस्थानोक्तैर्वा तैस्तैर्मधुरादिगणैरित्येवमादौ क्राथकल्कीकृतैस्तैलं पचेदिति संबध्यते । घृतमध्वित्यादि मधुरो गणः । डाडिमामलकेत्यादिकोऽम्लः । हरीतकीत्यादि कषायः । शोधनादिगणाध्यायः तत्रोक्तानि दूर्वानन्तेत्यादीनि पित्तघ्नानि येषामेव क्राथपरिभाषया क्राथः तेषामेव कल्कपरिभाषया कल्कः । क्षीरं तैलसमम् ॥

चन्दनं मधुकं काला द्राक्षा मधुरसा निशा ।
तत्सिद्धं पूर्ववत्तैलं दाहज्वरहरं परम् ॥

चन्दनादिके पूर्ववत् तैलमित्यनेन सक्षीरमिति स्मर्यते । काला नीलिनी । मधुरसा मूर्वा ।

शिरोगात्रं च तैरेव नातिपिष्टैः प्रलेपयेत् ।
तत्क्राथेन परीषेकमवगाहं च योजयेत् ॥
तथारनालसलिलक्षीरशुक्तघृतादिभिः ।

यान्येव द्रव्याणि तैलसाधनायोक्तानि तैरेव नातिश्लक्ष्णपिष्टैर्दाहे शिरो गात्रं च प्रलेपयेत् । तेषामेव क्वाथेन परिषेकमवगाहं च योजयेत् । तथैवारनालादिभिः परिषेकमवगाहं च ॥

कपित्थमातुलुङ्गाम्लविदारीलोध्रडाडिमैः ॥
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा ।
कर्पूरपद्मकोशीरकालीयाम्बुकुचन्दनैः ॥
तुङ्गप्रियङ्गुशैवालकमलोत्पलकर्दमैः ।
वेत्राग्रलोध्रपुण्ड्राह्वैरारनालेन कल्कितैः ॥
लेपा व्यस्तैः समस्तैर्वा दाहघ्ना वर्णकारिणः ।

कपित्थादिभिर्यथादोषादि यथालाभं च व्यस्तैः समस्तैर्वा लेपा दाहघ्नत्वादियुक्ताः । समस्तेषु लेपा इति बहुवचनं पुनः पुनः क्रियापेक्षया । अम्लोऽम्लवेतसः । बदरीपत्राणामम्लानां च मुसलक्षुण्णानां फेन उद्गच्छति । अरिष्टको निम्बः । कालीयकं चन्दनम् । कुचन्दनं रक्तचन्दनम् । अम्बु वाळकम् । तुङ्गः पुन्नागः । पद्मकेसरं वा । आरनाळेन कल्कितानि नातिश्लक्ष्णपिष्टानि ॥

धात्रीत्वक्पत्रनळदशंखव्याघ्रनखोत्पलैः ।
चन्दनाञ्जनमुस्तैश्च सवृक्षाम्लाम्लवेतसैः ॥
सजीवकैः समधुकैः सपलाशैः सडाडिमैः ।
बीजपूररसक्षौद्रशुक्तयुक्तैः प्रलेपितैः ॥
शिरस्यङ्गे च तृट्छर्दिदाहमोहशिरोरुजः ।
नश्यन्ति गण्डाः पिटकाः प्रलापश्च ज्वरार्तिजः
गौरामलककल्कश्च साम्लः साज्यश्च तद्गुणः

धात्र्यादिभिर्वृक्षाम्लादिभिश्च बीजपूररसादियुक्तैः शिरस्यङ्गे च प्रलेपितैस्तृडादयो नश्यन्ति । नळदं मांसी । वृक्षाम्लस्तिन्त्रिणी । गौराणामामलकानां कल्कोऽम्लेन काञ्चिकशुक्तादिना युक्तः सघृतश्च तद्गुणस्तृडादिनाशनः ॥

मधूकमधुकोदीच्यनीलोत्पलमधूलिकाः ॥
जयन्ति मधुसर्पिर्भ्यां लीढा दाहज्वरभ्रमान् ।
कासासृक्पित्तवीसर्पश्वासहिध्मावमीरपि ॥
वाम्यं च वामयेदाशु शीतेन मधुवारिणा ।
यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः ॥
तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः

मधूकादयः सर्पिर्मधुभ्यां लीढा दाहज्वरादीन् जयन्ति । उदीच्यं वाळकम् । मधूकं मधूकपुष्पम् । मधुकं मधुयष्टि । तस्मिंश्च ज्वरे सदाहेऽवश्यमधिकं श्लेष्मळमाशु शीतेन मधुवारिणा वामयेत् । सुबोधम् ॥

वल्लकीमधुरं गीतं चन्द्रिका हर्म्यमस्तकम् ।
हरन्ति दाहं हाराश्च हरिचन्दनशीतळाः ॥
दाहं मन्दानिलोद्धूताःकुल्याःसलिलमालिनः
चलत्प्रवाळाङ्गुलिभिस्तर्जयन्ति महाद्रुमाः ॥
वाचः शिशूनामव्यक्ता योषितो मदनातुराः ।
दाहं निर्भर्त्सयन्त्याशु सज्जनानां च सूनृताः॥

वल्लकी वीणा । महाद्रुमाश्चलत्प्रवाळाङ्गुलिभिर्दाहं तर्जयन्ति । किंभूताः कुल्यासलिलमालिनः तथा मन्दानिलोद्धूताः यान्येव चलत्प्रवाळानि तान्येव तर्जनाङ्गुल्यः । शिशूनामव्यक्ता वाचो दाहमाशु निर्भर्त्सयन्ति । योषितश्च मदनातुराः कामालसा वाचः । सज्जनानां च सूनृता वाचः । सूनृताः प्रियसत्यरूपाः ॥

रुचिभेदानुरोधेन नानाशक्तिसमन्वितः ।
दाहशीतज्वरहरः कान्ताकान्ताङ्गसङ्गमः ।
दाहशीतव्युपशमे तास्ततोऽपनयेत् पुनः ॥

तथा कान्तानां प्रियाणां यानि कान्तानि चारूण्यङ्गानि तेषां संगमो दाहज्व-

रहरः शीतज्वरहरश्च । कथमेको विरुद्धकारी भवतीत्याह रुचीत्यादि । रुच्यनुरोधेन नानाविधशक्तिभिरालेपनालंकारादिभिः समन्वितः । तथा च केचित् स्थूलामेव कामयन्ते । अन्ये तन्वीम् । तथा कुङ्कुमागर्वनुलेपनाच्छीतिहराः । ताश्च दाहे शीते वा प्रयुक्ताः कान्ता दाहशीतव्युपरमे पुनरपनेयाः न तु ताभिः संगतं चिरं कुर्यात् ॥

वीर्योष्णैरुष्णसंस्पर्शैस्तगरागरुकुङ्कुमैः ।
कुष्ठस्थौणेयशैलेयसरळामरदारुभिः ॥
नखरास्नापुरवचाचण्डैलाद्वयचोरकैः ।
पृथ्वीकाशिग्रुसुरसहिंस्राध्यामकसर्षपैः ॥
दशमूलामृतैरण्डद्वयपत्तूररोहिषैः ।
तमालपत्रपूतीकसल्लकीधान्यदीप्यकैः ॥
मिसिमाषकुलत्थाग्निप्रकीर्यानाकुलीद्वयैः ।
अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरेपचेत् ॥
क्वथितैः कल्कितैर्युक्तैः सुरासौवीरकादिभिः ।
तेनाभ्यञ्ज्यात् सुखोष्णेन तैः सुपिष्टैश्चलेपयेत्
कवोष्णैस्तैः परीषेकमवगाहं च योजयेत् ।

वीर्योष्णैरित्यादिना शीतज्वराचिकित्सा । तगरादिभिरन्यैश्च वीर्ये स्पर्शे चोष्णैः क्वथितैस्तैरेव च कल्कितैः सौवीरकसुरादियुक्तैः शीते ज्वरे तैलं पचेत् । तेन तैलेनाभ्यञ्ज्यात् । पृथक् स्नेहसमं कुर्यात् पञ्चप्रभृति तु द्रवम् । सुरादिकं चाम्लं यथालाभं प्रयुञ्जीत । नद्यादिकं द्रवं मिश्रीभूतं स्नेहसमम । तैरिति तगरादिभिः । स्थौणेयम् । चारटी-शुकबर्हाख्यं स्थौणेयं तैलपीतकम् । पुरो गुग्गुलुः । पृथ्वीका हिङ्गुपत्रिका । हिंस्रा मांसी । पत्तूरो मत्स्याक्षको जलशाकः । रोहिषो भूतिकम् । सल्लकी सुरभिः । मोचा महेरुण्यश्वमूत्रिका । दीप्यकोऽजमोजः । मिसिः शतपुष्पा । प्रकीर्यः पूतिकरजः । नाकुली सर्पसुगन्धा ॥

केवलैरपि तद्वच्च शुक्तगोमूत्रमस्तुभिः ॥
कुङ्कुमागरुकस्तूरीनखैलासुरदारुभिः ।
शैलेयचण्डात्वङ्मुस्तरास्नाकपिवचामयैः ॥
पृथक् प्रदेहाः सर्वैर्वा शीतघ्ना दृढकल्किताः ।
यवचूर्णं घृताभ्यक्तं पचेत् क्षीरे चतुर्गुणे ॥
दर्वीप्रलेपनं लेपं ज्वरार्तस्य प्रयोजयेत् ।

शुक्तादिभिः केवलैर्द्रव्यसहितैरपि तद्वत् परिषेकमवगाहं च योजयेदित्यर्थः । कुङ्कुमादिभिः प्रथक् सर्वैर्वा प्रदेहाः श्लक्ष्णपिष्टाः शीतज्वरहराः । सुबोधम् ।'

आरग्वधादिवर्गं च पानाभ्यञ्जनलेपने ॥
धूपानगरुजान्ये च वक्ष्यन्ते विषमज्वरे ।

आरग्वधेन्द्रयवपाटलीत्यादिवर्गं पानाद्यन्यतमया कल्पनया योजयेत् । अभ्यञ्जनं तेन पक्वं तैलम् । लेपने स एव जलपिष्टः । अगरुजो धूपः शीतज्वरे हितः। ये च धूपा विषमज्वरे वक्ष्यन्ते पलंकषेत्यादिना तानपि शीते योजयेत् ॥

अग्न्यनग्निकृतान् स्वेदान् स्वेदि भेषजभोजनम्

संसर्गबलयोगे च वातश्लेष्मनिबर्हणम् ।
गर्भभूवेश्मशयनं कुथकंबळरल्लकान ॥
निर्धूमदीप्तैरङ्गारैर्हसन्तीश्च हसन्तिकाः ।
मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान् ॥
संशीलयेद्वेपथुमान् यच्चान्यदपि पित्तळम् ।
अजाज्याः सगुडं कल्कं सगुळं वामृतारसम्
रसं वार्ताकफलजं पिबेद्वा मधुसंयुतम् ।
मधुकागरुकौन्तीनां कल्को व्याघ्रनखस्य च॥
मद्येन पीतः सक्षौद्रस्त्विशीतज्वरापहः ।
दयिताः स्तनशालिन्यः पीना विभ्रमभूषणाः
यौवनासवमत्ताश्च तमालिङ्गेयुरङ्गनाः ।
वीतशीतं च विज्ञाय तास्ततोऽपनयेत् पुनः ॥

अनग्निकृताः स्वेदाः निवातसदनगुरुप्रावरणमुहुर्मद्यपानक्षुद्व्यायामातपनियुद्धाध्वभारहरणामर्षभयैरिति । हसन्तीत्र दीप्तत्वात् हसन्ती हसन्तिका अङ्गारशकटी । त्र्यूषणं मरिचं पिप्पली शुण्ठी च । वेपथुः शीतेन प्रकम्पः । मधुकादीनां चतुर्णां कल्को मद्येन । सुबोधम् ॥

आनाहेकालवित् कुर्यात् क्रियामलसकोदिताम्
पिप्पलीपिप्पलीमूलयवानीचित्रसाधिताम् ॥
यवागूं पाययेच्चैनमनिलस्यानुलोमनीम् ।

आनाहे मात्राशीतीयेऽलसकोक्तां क्रियां कुर्यात् । कालवित् भिषग्व्याधेस्तद्योग्यं कालं ज्ञात्वेत्यर्थः । एवं चानाहिनं पिप्पल्यादिसिद्धां यवागूं पाययेत् ॥

सोपद्रवोऽपि चेदेवं ज्वरः शीतो न शाम्यति॥
अत्युदीर्णेऽनिलकफे स्वस्थाने पित्तधाम्नि वा।
तक्रानुपानं त्रपुसं भक्षयित्वानलं भजेत् ॥
आ स्वेदसंभवात्तिष्ठेत् प्रावृतस्तद्वदातपे ।
ततो विमृदितस्नातो युक्ताशी स्याद्गते ज्वरे।

एवमनन्तरोक्तया क्रियया शीतज्वरो नशाम्यति सोपद्रवो यदि वर्तते ततोऽसिन्नातुरस्त्रपुसमामं भक्षयित्वानलं भजेत् । न त्वेवं सर्वत्र अपि त्वनिलकफे अत्युदीर्णे स्वस्थानस्थे पित्तस्थानस्थे वा । कियन्तं कालं भजेदित्याह । आ स्वेदसंभवात्तथा तद्वत्तक्रानुपानं त्रपुसं भक्षयित्वा प्रावृतः सन्ना स्वेदसंभवादातपे तिष्ठेत् । ततः स्वेदे संभूते मृदितः स्नातश्च मध्यभोजी भवेत् । गते ज्वर इत्यनेनैतत् प्रदर्श्यते । सज्वरो भक्षितत्रपुसश्च तदहरन्नं न भुञ्जीतेति । एवं च भवतीत्याह ॥

शमं तौ पित्तवृध्यैव प्रपद्येते स्वधाम च ॥
निवर्तते ततः शीघ्रं वातश्लेष्मोद्भवो ज्वरः ।

शममित्यादि । वातकफावेवं पित्तवृध्या शमं स्वधाम च प्रपद्येते । ततश्च तयोः शमं स्वस्थानं च यातयोः वातश्लेष्मोद्भवः शीतज्वरः शीघ्रं निवर्तते ॥

स्वर्जिकाकुष्ठमञ्जिष्ठालाक्षामूर्वानिशौषधैः ।
सतक्रं साधितं तैलमभ्यङ्गाद्दाहशीतजित् ॥

स्वर्जिकादिभिः स्नेहाच्चतुर्थांशैस्तक्रेणैव स्नेहसमेन साधितं तैलमभ्यङ्गाद्दाहज्वरे दाह-

जित् शीतज्वरे शीतजित् । सुबोधम् ॥

**वमनैश्च विरेकैश्च वस्तिभिश्च यथाक्रमम् ।
ज्वरानुपचरेद्धीमान् कफपित्तानिलोद्भवान् ॥**

वमनैः कफोद्भवे विरेकैः पित्तोद्भवे वस्तिभिर्वातोद्भव इति क्रमः । परतश्च सर्वावस्थास्वप्रतिषिद्धास् विज्ञेयः ॥

**संसृष्टैः सन्निपतितैरेकानेकोल्बणैः समैः ।
ज्वरान् दोषक्रमापेक्षी यथोक्तैरौषधैर्जयेत् ॥**

संसृष्टैर्द्विसंख्यैर्मिश्रीभूतैस्तथा सन्निपतितैस्तुल्यैर्मिश्रीभूतैरुभयोरप्येकोल्बणैर्द्वयोल्बणैर्वा यो ज्वरस्तान् ज्वरान् यथोक्तैरेव यथादोषमौषधैर्जयेत् ॥

विषमदोषं समदोषं च सन्निपातमधिकृत्याह॥

**वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ।
कफस्थानानुपूर्व्या वा सन्निपातज्वरं जयेत् ॥**

वर्धनेनेत्यादि । विषमदोषमेकस्य दोषस्य वर्धनेन जयेत् । अथवा एकस्योच्छ्रितस्य क्षपणेन जयेत् । अथवा यत्र द्वावुच्छ्रितौ तत्रैको हीनः । यत्र द्वौ हीनौ तत्रैक उच्छ्रित इति । समदोषं तु कफस्थानानुपूर्व्या जयेत् । प्रथममेव कफविपरीतमौषधं युञ्ज्यात् ततः पित्तविपरीतं ततो वातविपरीतमिति ।।

**निद्रानिवारणोपायः सन्यासाभिहितो हितः ।
सन्निपाते विशेषेण दारुणोऽयमुपद्रवः ॥**

सर्वस्मिन् ज्वरे निद्राया निवारणोपायः सन्यासे योऽभिहितस्तीक्ष्णनस्यादिकः स हितः । सन्निपाते तु स विशेषेण हितः । योऽयं निद्राख्य उपद्रवो दारुणः सन्निपाते ॥

**सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोफः संजायते तेन कश्चिदेव विमुच्यते ॥
रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्नावनैः कवळग्रहैः ।**

सन्निपातज्वरस्यान्ते सन्निपातज्वरेण क्षपिते शरीरे पुरुषस्य कर्णमूले सुदारुणः शोफः संप्राप्तिविशेषवशाज्जायते । तेन शोफेन कश्चिदेव विमुच्यते प्रायो मारयतीत्यर्थः । तस्मात्तं शोफं कबळग्रहान्तैः शीघ्रं जयेत् ॥

**शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति।
शाखानुसारीतस्याशुमुञ्चेद्बाह्वोःक्रमात्सिराम्**

यस्य पुंसः शाखानुसारी धात्वाश्रितो ज्वरो रक्तावसेचनाच्छेषेण शीतोष्णादिकोपक्रमेण न शाम्यति तस्य बाह्वोः क्रमात् सिरां मुञ्चेत् । न तु द्वयोर्युगपत् ॥

**अयमेव विधिः कार्यो विषमेऽपि यथायथम्
ज्वरे विभज्य वातादीन्यश्चानन्तरमुच्यते ॥
पटोलकटुकामुस्ताप्राणदामधुकैः कृताः ।
त्रिचतुष्पञ्चशः क्वाथा विषमज्वरनाशनाः ॥**

तथा य एव विधिः पूर्वमुक्तः स एव विषमे सततकादिके वातादिदोषविशेष कोप-

वशेन यथात्मीयः कार्यः । यश्च विधिरनन्तरमुच्यते सोऽपि कार्यः । सुबोधम् ॥

योजयेत्त्रिफलां पथ्यां गुडूचीं पिप्पलीं पृथक्
तैस्तैर्विधानैः सगुडं भल्लातकमथापि वा ॥

तथा त्रिफलादीन्नानाविधैर्विधानैः पृथग्योजयेत् । कदाचिद्दोषाद्यपेक्षया विषमज्वरे त्रिफलाः । कदाचिद्धरीतकी । कदाचित् गुडूचीति पृथक्शब्दार्थः । सुबोधम् ॥

लंघनं बृंहणं वापि ज्वरागमनवासरे ।
प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतम्
जीर्णं तद्वद्दधि पयस्तक्रं सर्पिश्च षट्पलम् ।
कल्याणकं पञ्चगव्यं तिक्ताख्यं वृषसाधितम् ॥

विषमे सततकादिचतुष्टये यस्मिन् दिने ज्वर आगच्छति तस्मिल्लंघनं वोपक्रमं बृंहणं वा कुर्वीत दोषाद्यपेक्षया । सुबोधम् । घृतं जीर्णमिति संबध्यते । तथेति सतैलम् । तद्वदिति प्राग्भक्तं दध्यादिकम् । षट्पलादिकं सर्पिश्च । षट्पलं पञ्चकोलयवक्षारैः राजयक्ष्मण्युक्तम् । कल्याणमुन्मादे । पञ्चगव्यमपस्मारे । तिक्तकं कुष्ठे । वृषघृतं रक्तपित्ते ॥

पञ्चगव्यस्य महतो विधिना पञ्चमाहिषम् ॥
पञ्चाजं चतुरौष्ट्रं च सिद्धं सिद्धं घृतं —

तथा महतः पञ्चगव्यस्य विधानेनापस्मारोक्तेन द्विपञ्चमूलादिक्वाथेन भार्ङ्गीदिकल्केन च पञ्चमाहिषमपि सिद्धम् । पञ्चमाहिषाणि विड्समूत्रादीनि । तद्वदेव पञ्चाजम् । तथा चतुरौष्ट्रं विड्सहीनम् । सिद्धं पक्वम् । सिद्धं नाम फलसाधनाय ॥

—तथा ।
कटुरोहिणिमञ्जिष्ठावृषग्रन्थिकचित्रकैः ॥
पाठास्वगुप्तादिनिशैः पञ्चगव्यस्य पञ्चसु ,
प्रस्थेषु संयुतैः सेव्यं विषमज्वरजित् परम् ॥
वाक्स्वरस्मृतिमेधाग्निबलारोग्यवृषत्वकृत् ।

तथा कटुरोहिणिकादिभिः संयुक्तैः पञ्चसु पञ्चगव्यप्रस्थेषु सिद्धं घृतं सिद्धम् । गोमयस्वरसक्षीरदधिमूत्रघृतानि च पञ्चगव्यानि । कल्कस्य स्नेहाच्चतुर्थांशः । ग्रथिकं पिप्पलीमूलम् ॥

कोलाग्निमन्थत्रिफलाक्वाथे दध्ना घृतं पचेत् ॥
तिल्वकावापमेतच्च विषमज्वरनाशनम् ।

कोलादिक्वाथे घृताच्चतुर्गुणे दध्ना स्नेहसमेन पट्टिकालोद्ध्रचूर्णस्य स्नेहाच्चतुर्थेनांशेन घृतं पचेत् ॥

शृतक्षीरघृतक्षौद्रसिताकृष्णाः खजाहताः ॥
विषमज्वरहृद्रोगक्षतकासक्षयापहाः ।

शृतं क्षीरं घृतं क्षौद्रं समं गृहीत्वा शर्करापिप्पलीचूर्णं गाढत्वपरिहारेण संमिश्र्यते खजाहताः सन्तो विषमज्वरनाशनाः ॥

सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षजम्

मांसं मेध्योष्णवीर्यं च सहान्नेन प्रकामतः ।
सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत् ॥
सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत् पुनः

तथा सुरादिकं सेवित्वा तदहः स्वप्यादथवा तत्सेवित्वा वमेत् । घृतस्य वा महतीं मात्रामहोरात्रजरणलक्षणां पीत्वा छर्दयेत् ॥

नीलिनीमजगन्धां च त्रिवृतां कटुरोहिणीम् ॥
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ।

ज्वरागमनदिवसे तु विषमज्वरेषु नीलिन्यादीन् जलेन पिबेत् । किंभुत आह । स्नेहस्वेदाभ्यां संस्कृतः ॥

आस्थापनं वा तदहर्दद्यात्स्विन्नस्य यापनम् ॥
पयसा पृषदंशस्य शकृद्वा तदहः पिबेत् ।
मस्तुना वा वृषशकृत् सुरया वाथ सैन्धवम् ॥

अथवा तदहर्ज्वरागमनदिवसे स्विन्नस्य सतो यापनाख्यमास्थापनं दद्यात् । यापनाः कल्पसिद्धिषु वक्ष्यन्ते । सुबोधम् । पृषदंशो मार्जारः । वृषः वृषपुंगवः । तस्य विण्मस्त्वंशेन च संयुक्तम् । सैन्धवं सुरयैव ॥

मनोह्वासैन्धवं कृष्णातैलेन नयनाञ्जनम् ।
योज्याहिङ्गुसमाव्याघ्रीवसानस्येससैन्धवा ॥
पुराणसर्पिः सिंहस्य वसा तद्वत् ससैन्धवा ।

व्याघ्रवसा हिङ्गुसमा सैन्धवेन च स्तोकेन युक्ता नस्यम् । पुराणसर्पिः केवलम् ॥

पलंकषानिम्बपत्रं वचा कुष्ठं हरीतकी ॥
सर्षपाः सयवाः सर्पिर्धूपो विड्वा विलाळजा ।
पुरध्यामवचासर्जनिम्बार्कागरुदारुभिः ॥
धूपो ज्वरेषु सर्वेषु कार्योऽयमपराजितः ।

पलंकषादिकं घृताभ्यक्तं धूपः । विलाळविट् केवला । पुरादिभिरपराजिताख्यो धूपः सर्वज्वरेषु कार्यः । पुरो गुल्गुलुः ॥

सहदेवावचाभद्रानाकुलीभिःप्रयोजयेत् ।
धूपनोद्वर्तनालेपान् सर्वज्वरनिबर्हणान ॥

सहदेवादिभिः सर्वज्वरहरान् धूपादीन्योजयेत् । भद्रा कृष्णशारिबा । नाकुली सर्पसुगन्धा ॥

धूमनस्याञ्जनोत्त्रासा ये चोक्ताश्चित्तवैकृते ।
दैवाश्रयं च भैषज्यं ज्वरान् सर्वानपोहति ॥
विशेषाद्विषमान् प्रायस्ते ह्यागन्त्वनुबन्धजाः ।

चित्तवैकृते च भूतोन्मादापस्मारेषु धूपादय उक्तास्तेऽपि ज्वरेषु योज्याः । दैवाश्रयं भैषज्यं मणिमन्त्रादि । विषमान् ज्वरान्न तथान्यदौषधं व्यपोहति यथा दैवव्यपाश्रयम् । यतस्ते विषमाः प्रायेणागन्तोराभिचारग्रहावेशादेरनुबन्धेन जायन्ते । तत्र च बलवद्दैवव्यपाश्रयं कर्म ॥

यथास्वं च सिरां विध्येदशान्तौ विषमज्वरे ।

विषमज्वरे च तीक्ष्णोष्णादिभिः सर्व-

था अशान्तौ यथास्वं सिरां विध्येत । तृतीयकेऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके बाह्वोश्चेत्यादि यथास्वशब्दार्थः ।'

रसस्संस्थे तु सर्वस्मिन् कुर्याद्वमनलंघने ।
सेकसंशमनालेपरक्तमोक्षानसृक्स्थिते ॥
तीक्ष्णान्विरेकानमांसस्थेमेदोघ्नंमेदसिस्थिते ।
अस्थिस्थे वातशमनमभ्यङ्गस्वेदमर्दनम् ॥
ज्वरे वातार्तिशमनं विशेषाद्बस्तिकर्म च ।

रससंस्थे प्राधान्येन वमनम । अन्यद्यथायोग्यं लंघनम् । रक्तस्थे ज्वरहरान सेकादीन । सुबोधम् । मेदोघ्नं यत्किञ्चित । अस्थिस्थे ज्वरे वातशमनमभ्यङ्गादिकं कुर्यात् । ज्वरे चान्यत्र तथा वातार्तिशमनं यथा बस्तिरतस्तमपि कुर्यात् । मज्जशुक्रस्थयोः कष्टत्वाद्विशेषेण नोक्तम् । सामान्येन तु मज्ञश्चतुर्थकोक्त्यैवोक्तम् ॥

केवलानिलवीसर्पविस्फोटाभिहतज्वरे ।
सर्पिष्पानहिमालेपसेकमांसरसाशनम् ॥
कुर्याद्यथास्वमुक्तं च रक्तमोक्षादिसाधनम् ।
ग्रहोत्थे भूतविद्योक्तं मणिमन्त्रादिसाधनम् ॥
ओषधीगन्धजे पित्तशमनं विषजिद्विषे ।

केवलानिलादिके ज्वरे सर्पिष्पानादिकं कुर्यात् । यथास्वं चाध्यायेपूक्तं विसर्पादिषु रक्तमोक्षादि चिकित्सितं तदपि ज्वरे कुर्यात् । सुबोधम् ॥

इष्टैरर्थैर्मनोज्ञैश्च यथादोषशमेन च ॥
हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत् ।

क्रोधकामभयशोकजान् ज्वरानिष्टैः प्रियैर्मनोज्ञै रमणीयैर्जयेन् । पित्तशमनेन क्रोधजम । भीशोककामजान् वातशमनेनेत्यर्थः । इदं हितं तदात्वानुबन्धयोरिदमहितमिति ज्ञात्वा तदाचरणपरिहाराभ्यां च जयेत् ॥

क्रोधजो याति कामेन शान्तिं क्रोधेन कामजः
भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ
शापाथर्वणमन्त्रोत्थे विधिर्दैवव्यपाश्रयः ॥

क्रोधजस्तु ज्वरः क्रोधविषये कामोत्पादनेन शमं याति । कामजश्च कामविषये क्रोधोत्पादनेन । भयोद्भवो ज्वरः शोकोद्भवश्च ताभ्यां कामक्रोधाभ्यां शमं यातः भयविषये क्रोधविषये च दोषाद्यपेक्षया कदाचित् क्रोधः कदाचित् कामः । तथेतरौ कामक्रोधोद्भवौ भीशोकाभ्यां शमं यातः । सुबोधम् । दैवव्यपाश्रयो विधिर्मणिमन्त्रादिः ॥

ते ज्वराः केवलाःपूर्वं व्याप्यन्तेऽनन्तरं मलैः ।
तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत् ॥
न हि ज्वरोनुऽबध्नाति मारुताद्यैर्विनाकृतः ।

एतेषु चागन्तुज्वरेष्वाहारादिकं दोषानुसारेण कल्पयेत् । यतस्ते आगन्तवो ज्वरा आगन्तुसमवधानवेलायां केवलाः सन्तापमात्ररूपा एव भवन्ति । तथाप्यनन्तरं मलैर्वातादिभिर्व्याप्यन्ते यस्मात् ज्वरो मारुता-

यैर्विनाकृतोऽनुबन्धं न गृह्णाति । अनुबन्धश्चेत् स्थिता एव मारुतादय इति ॥

कथास्त्रिवर्गसंयुक्ता रुङ्निद्रादिविनोदिनीः ।
शस्ता विचित्राः शृणुयान्न प्रेतव्याधिताश्रयाः
ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत् ।
त्यजेदाबललाभाच्च व्यायामस्नानमैथुनम् ॥
गुर्वसात्म्यं विदाह्यन्नं यच्चान्यज्ज्वरकारणम् ।
न विज्वरोऽपि सहसा सर्वान्नीनो भवेत्—

स च ज्वरी ज्वरहेतुकरुङ्निद्रारत्यादिविनोदनाय विचित्राः प्रशस्ताश्च धर्मार्थकामसंयुताः कथाः शृणुयात् न तथा प्रेताश्रिताश्च । अस्यातुरस्य ज्वरागमनकालस्मृतिं मनोहरैः शब्दादिभिर्हरेत् । सुबोधम् ॥

—तथा ॥

निवृत्तो हि ज्वरः शीघ्रं व्यापादयति दुर्बलम्
सद्यः प्राणहरो यस्मात्तस्मात्तस्य विशेषतः ॥
तस्यां तस्यामवस्थायां कुर्यात्तत्तद्भिषग्जितम्

तथेति सर्वान्नाहारत्वे । हिशब्दो यस्मादर्थे । यस्माज्ज्वरो निवृत्तो गत्वा पुनः प्रत्यावृत्तः पूर्वक्षपितत्वात् दुर्बलं नरं शीघ्रं व्यापादयतीति । स च निवृत्तो ज्वरो यस्मात् सद्यः प्राणहरस्तस्मात् तस्यावस्थाविशेषं विकल्प्य योग्यमौषधं कुर्यात् ॥

मनोभिरामा विषया वचनं ह्लादि दक्षिणम्
करुणार्द्रं मनः शुद्धं सर्वज्वरनिषूदनम् ॥

मनसो बलाबलेन तदा तदा ज्वरः स्यादित्युक्तमतो मनःपुष्टये मनोभिरामा इत्यादिकमुच्यते । विषयाः शब्दादिकाः । दक्षिणमनुकूलम् । शुद्धं रागादिभिरनुपहतम् ॥

मातरं पितरं देवान् वैद्यान् विप्रान् हरं हरिम्
पूजयेच्छीलयेद्दानदमसत्यदयार्जवान् ।
धारयेच्च सदा मन्त्रमणिरत्नमहौषधीः ॥

मात्रादीन् पूजयेत् । दानादींश्च शीलयेत् । शुचिश्च सन्मूर्ध्नि सिद्धमन्त्रादिकं धारयेत् ॥

आर्यावलोकितं पर्णशबरीमपराजिताम् ।
प्रणमेदार्यतारां च सर्वज्वरनिवृत्तये ॥

आर्यावलोकिताख्यं बौद्धं देवं प्रणमेत् । तथैव पर्णशबरीं नाम विद्यां तथापराजितामार्यतारां च सर्वज्वरनिवृत्यर्थं प्रणमेदेव ॥

जपंस्तथा गतोष्णीषं सर्वव्याधिचिकित्सितम्
आगन्तुदोषसहजैः सर्वरोगैर्विमुच्यते ॥

इति जीर्णज्वरचिकित्सितं नाम
द्वितीयोऽध्यायः ॥

तथा गतोष्णीषं नाम मन्त्रविशेषं जपन्नागन्तुजैर्दोषजैः सहजैश्च रोगैर्विमुच्यत इति । तत्र तथा गतोष्णीषवत् सर्वव्याधिचिकित्सितमस्माभिः पर्णशबर्याद्याः पठ्यन्ते ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चिकित्सिते द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः।

अथ क्रमप्राप्तस्य रक्तपित्तस्य चिकित्सां वर्णयितुमध्याय आरभ्यते ॥

अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः।

ऊर्ध्वगं बलिनोऽवेगमेकदोषानुगं नवम् ।
रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम् ॥
अधोगं यापयेद्रक्तं यच्च दोषद्वयानुगम् ।
शान्तं शान्तं पुनः कुप्यन्मार्गान्मार्गान्तरश्च यत्
अतिप्रवृत्तं मन्दाग्नेस्त्रिदोषं द्विपथं त्यजेत् ।

ऊर्ध्वगमित्यादिविशिष्टं रक्तपित्तं साधयेत् चिकित्सेत् । अधोगमित्यादियुक्तं च यापयेत् । यद्व्रजत् । अतिप्रवृत्तत्वादियुक्तं तु त्यजेत्तन्न चिकित्सेदित्यर्थः । सुखः कालो द्विविधोऽप्यभिमतः । उपद्रवाः विकृतव्याधिविज्ञानीये प्रदर्शिताः ॥

ज्ञात्वा निदानमयनं मलावनुबलौ बलम् ।
देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत् ॥
लंघनं बृंहणं चादौ शोधनं शमनं तथा ।

साध्ये च रक्तपित्ते निदानादिकं ज्ञात्वा तदानुगुण्येन कदाचिदादावेव लंघनं योजयेत् कदाचित् बृंहणमिति । तथा कदाचिच्छोधनं कदाचिच्छमनम् । अनुबलौ मलौ वातकफौ । शोधनादेः सामान्येनोक्तत्वात् सन्तर्पणोत्थमित्यादिना विशेष उच्यते ॥

सन्तर्पणोत्थं बलिनो बहुदोषस्य साधयेत् ॥
ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतम् ।
शमनैर्बृंहणैश्चान्यल्लंघ्यबृंह्यानवेक्ष्य च ॥

तुशब्दात् सन्तर्पणोत्थत्वादियुक्तमेवाधोभागं वमनेन । अन्यदित्यपतर्पणोत्थं अबलस्याल्पदोषस्य च यद्रक्तपित्तं तच्छमनैर्बृंहणैश्च साधयेत् । लंघ्यबृंह्यानवेक्ष्य च रक्तपित्तं साधयेदिति । अनेनैतदुक्तं व्याधिकर्शितादयो बृंह्यत्वेन ये पूर्वमुक्तास्तेषां सन्तर्पणोत्थत्वादियुक्तं शोधनेन तथा साधयेद्यथा बृंह्यत्वाल्लंघनं न दोषाय भवति । तथा येऽपि मेह्यादयो लंघ्यत्वेन पठितास्तेषामपतर्पणोत्थत्वादियुक्तं तथाविधाभ्यां शमनबृंहणाभ्यां साधयेत् यथाविधाभ्यां लंघ्यस्य बाधा न संपद्यत इति ॥

ऊर्ध्वे प्रवृत्ते शमनौ रसौ तिक्तकषायकौ ।
उपवासश्च निश्शुण्ठीषडंगोदकपायिनः ॥
अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ।

ऊर्ध्वे प्रवृत्त इत्यादिना शमनबृंहणयोर्मार्गविशेषेण विषयप्रदर्शनम् । षडङ्गं घनादिसाधितमुदकं ज्वरपठितम् । मधुरो रसो नानाविधया भक्ष्यादिकल्पनया ॥

ऊर्ध्वगे तर्पणं योज्यं पेयापूर्वमधोगते ॥

अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत्।
धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत् ॥

ऊर्ध्वगे यदान्नं प्रयुज्यते तदा प्रथमं तर्पणं लाजसक्तवः । अधोगे तु पेया प्रयोज्या । अशुद्धं रक्तमश्नतो बलिनश्च प्रवृत्तं नैव धार्यं स्तम्भनादिना । तद्धि धारितं रोगकृत् भवति अन्यथा पुनर्यत् भोजनरहितस्याबलस्य च प्रवृत्तं शुद्धं च तच्छीघ्रं धारयेत् । यतस्तद्रक्तपित्तमग्निवच्छीघ्रकारि रक्तक्षयाच्छीघ्रं मारयतीत्यर्थः ॥

त्रिवृतात्रिफलाधात्रीत्रायन्त्यारग्वधाभयाः ।
गवाक्षीक्षुरसक्षीरद्राक्षाक्षौद्रासितोत्कटाः ॥
यथास्वं कल्पविहिता विरेकार्थं प्रयोजयेत् ।

त्रिवृतादयोऽभयान्ताः पृथक्कल्पोक्तेन विधानेन यथास्वं विषयेषु गवाक्षीक्षुरसादिभिर्यथायोगमेकद्वित्रैरुत्कटा विरेकार्थं रक्तपित्ते प्रयोजयेत् ॥

त्रिवृच्छ्यामाकषायेण कल्केन च सशर्करम् ।
साधयेद्विधिवल्लेहं लिह्यात् पाणितलं ततः ॥

त्रिवृतः श्यामायाश्च क्वाथं शर्कराश्च विपाच्य तत्रैव च लेहत्वापादनयोग्यं त्रिवृच्छ्यामाकल्कं दत्वा लेहं साधयेत् । ततो लेहात् पाणितलं कर्षं लिह्यात् ॥

त्रिफलात्रिवृताश्यामापिप्पलीशर्करामधु ।
मोदकः सन्निपातोर्ध्वरक्तपित्तज्वरापहः ॥

त्रिफलादिभिः समैः शर्करया पित्तजयायाधिकया माक्षिकेण कृतो मोदकः सन्निपातमूर्ध्वप्रवृत्तं रक्तं शोफं ज्वरं चापहन्ति ॥

त्रिवृत्समसिता तद्वत् पिप्पलीपादसंयुता ।

त्रिवृतश्चतुर्थेन भागेन पिप्पली । तद्वदिति मोदकः । सन्निपातादिहरः । माक्षिकमनुक्तमपि तद्वद्ग्रहणेन मोदकत्वाल्लभ्यते । इति विरेचनानि रक्तपित्ते ॥

वमनं फलसंयुक्तं तर्पणं ससितामधु ॥
ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकम् ।
फलेन्द्रयवगाङ्गेयामधुकं वा समाक्षिकम् ॥
क्षीरं वा रसमिक्षोर्वा—

फलसंयुक्तं तर्पणादिकमधोगते रक्तपित्ते वमनं भवति । तर्पणं लाजसक्तवो मदनसितामधुयुक्तम् । ससितं वा जलमिति वाशब्दात् फलसंयुक्तमेव । क्षीरेक्षुरसयोरनुक्तान्यपि फलानि वमनत्वात् प्राधान्याच्च लभ्यन्ते ॥

—शुद्धस्यानन्तरो विधिः ।
यथास्वं मन्थपेयादिः प्रयोज्यो रक्षता बलम्।

एवं विरेकेण वमनेन वा शुद्धस्य यथास्वं विषयेष्वनन्तरो वक्ष्यमाणो विधिः कचिन्मन्थादिः प्रयोज्यः । कचित् पेयादिः । तथा च प्रयोज्यो यथा बलहानिर्न भवति ॥

मन्थो ज्वरोक्तोद्राक्षादिः पित्तघ्नैर्वा फलैः कृतः

मधुखर्जूरमृद्वीकापरूषकसिताम्भसा ॥
मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभिः ।
डाडिमामलकाम्लोवामन्दाग्न्यम्लाभिलाषिणः

ज्वरोक्तो द्राक्षादिर्मन्थः द्राक्षाडाडिमकाष्मर्यपरूगाविल्वपरूषकैः । समधूकैः सबदरैः सक्षौद्रैः ससितोपलैः । ज्वरघ्नैस्तोयमृदितैरिति । अन्यैर्वा पित्तघ्नैः फलैः कृतः । अथवा पञ्चसाराख्येनाम्भसा करणभूतेन घृताभ्यक्तैर्लाजसक्तुभिः कृतो मन्थः । अन्यैः पञ्चसारशब्देन क्षतक्षयकासचिकित्सिते पठितं शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण च । संयुक्तं वा शृतं क्षीरमिति क्षीरं व्याख्यातम् । तत्र त एव पण्डिताः प्रमाणम् । मन्दाग्नेरम्लाभिलाषिणश्च रक्तपित्तवतो डाडिमेनामलकैश्चापादिताम्लत्वो मन्थः पित्तश्लेष्माधिक्यादिना पेया योग्यस्यैते मन्थाः । तत्र च ज्वरोक्तं स्मरणीयम् ॥

कमलोत्पलकिञ्जल्कपृश्निपर्णीप्रियङ्गुकाः ।
उशीरं शाबरं लोद्ध्रं शृङ्गिवेरं कुचन्दनम् ॥
ह्रीबेरं धातकीपुष्पं विल्वमध्यं दुरालभा ।
अर्धार्धैर्विहिताः पेया वक्ष्यन्ते पादयौगिकाः ॥
भूनिम्बसेव्यजलदाश्चन्दनाम्बुप्रियङ्गवः ।
शालिपर्ण्या युता मुद्गाः पृश्निपर्ण्या मसूरकाः
तुवर्यो वातिवलया बलया वा हरेणवः ।
तत्कषाये हिताः पेया मांसपेयास्तथा रसाः ॥
अनम्लाः किञ्चिदम्ला वा सघृतक्षौद्रशर्कराः ।

यत्र तु योग्याः पेयास्तत्र यथाविषयं कमलाद्युशीरादिह्रीबेरादिभिस्त्रिभिरर्धश्लोकैराचार्यैर्विहिताः पेया रक्तपित्ते । भूनिम्बेत्यादिना श्लोकचतुर्भागैष्षट् पेया वक्ष्यन्ते । तुवर्य आढक्यः । एषां चानन्तरोक्तानां पेयौषधानां क्वाथे सिद्धाः दोषाद्यपेक्षया कदाचित् पेयाः केवला हिताः । कदाचिन्मांसपेयाः कदाचिन्मांसरसाः । ते च पेयादय औषधक्वाथसिद्धाः कदाचिद्दाडिमामलकादिनाम्लाः सर्वे च घृतादियुक्ताः ॥

शूकशिम्बीभवं धान्यं शाकं मांसं च शस्यते ॥
अन्नस्वरूपविज्ञाने यदुक्तं लघुशीतलम् ।

अन्नस्वरूपविज्ञानेऽध्याये शूकधान्यादिकं यल्लघु शीतं चोक्तं तद्रक्ते शस्यते । न तु यवकादिमाषादिकाकमाच्यादि ॥

पूर्वोक्तमम्बु पानीयं पञ्चमूलेन वा शृतम् ॥
लघुना शृतशीतं वा मध्वम्भो वा फलाम्बु वा ।

पूर्वोक्तमम्बु निश्शुण्ठिषडङ्गम् । अथवा लघुना ह्रस्वेन पञ्चमूलेन सिद्धम् । शृतशीतं वा केवलम् । फलाम्बु द्राक्षाशर्कराखर्जूरादिमृदितपूर्वकम् ॥

पद्मकाद्यञ्जनादिं च शारिवादिं च कल्पयेत् ॥
अन्नपाने गणं तद्वद्दशकं दाहनाशनम् ।
कफानुगे यूषशाकं मारुतानुगते रसम् ॥

अन्नपाने च पद्मकाद्यञ्जनादिशारिवादिकं गणं दाहनाशनं च दशकं कल्पयेत् ।

एषां काथेन साधयेत् पानं चेत्यर्थः । अथवान्नं पानं यथायोगमेतैः संयुक्तं कारयेत् । पद्मकलाजोशीरं मधुकोत्पलशारिबासितोदीच्यम् । काष्मर्यफलं चन्दनमेष गणो दाहनाशनः प्रोक्तः । सुबोधम । रसो मांसरसः ॥

अभीरोरङ्कुरैर्लाबाः सहमुद्गाः पटोलजैः ।
मकुष्ठाधन्वयाषोत्थैरस्रापित्ते परं मताः ॥
शशः सवास्तुकः शस्तो विबन्धे तित्तिरिः पुनः
उदुम्बरस्य निर्यूहे साधितो मारुतेऽधिके ॥
प्लक्षस्य बर्हिणस्तद्वन्न्यग्रोधस्य च कुक्कुटः ।
विसोत्पलमृणाळानां वर्तकक्रकरौ हितौ ॥
वर्तिकाम्भोजनाळानामश्वत्थस्य कपिञ्जलः ।
यत्किञ्चिद्रक्तपित्तस्य निदानं तच्च वर्जयेत् ॥

लावा नाम पक्षिणः । अभीरोः शतावर्या अङ्कुरैः सह सिद्धाः रक्तपित्ते परमत्यर्थं मताः पूजिताः । तथा मुद्गाः पटोलजैरङ्कुरैः सह सिद्धाः । तथा मकुष्ठादुरालभोत्थैश्चाङ्कुरैः । सुबोधम् । पुनश्शब्दात्तित्तिरिरपि सवास्तुकः । मारुताधिके रक्तपित्ते उदुम्बरक्काथसाधितः तित्तिरिः । कचिन्मारुतेऽधिके प्लक्षस्य निर्यूहे बर्हिणो मयूरः । फलवर्हाभ्यामिनज्मत्वर्थीयः । तथा बिसादीनामन्यतमस्य निर्यूहे वर्तकः क्रकरो वा हितः । मृणाळं बिसाङ्कुरः । सर्वा षष्ठी निर्यूहापेक्षया । भृशोष्णतीक्ष्णादि सर्वं रक्तपित्तकारणं रक्तपित्ती वर्जयेत् ॥

वाशारसेन फलिनीमृल्लोध्राञ्जनमाक्षिकम् ।
पित्तासृक् शमयेत् पीतं निर्यासो वाटरूषकात्
शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा ।
वृषः सद्यो जयत्यस्रं स ह्यस्य परमौषधम् ॥
वाशारसेन भूनिम्बकटुकाशर्कराः पिबेत् ।
तेनैव वा क्षौद्रयुतं पद्मकेसरपद्मकम् ॥
सलोध्रनागकुसुमशाड्वलोत्पलवास्तुकम् ।

फलिन्यादि वाशास्वरसेन पीतं पित्तासृक्शमनम् । अथवा केवल एवाटरूषस्य वाशाया निर्यासः स्वरस. । अथवा न केवलोऽपि तु शर्करामधुसंयुक्तः स वाशानिर्यासः । अथवा शृतः क्वथितः । वृषः सद्यो जयत्यस्रम् । हिशब्दो यस्मादर्थे । यस्मात् सर्वप्रकारोऽपि वृषोऽस्य रक्तस्य परं प्रधानमौषधम् । भूनिम्बादि चूर्णं वाशारसेन प्रयोगः । तेनैव माक्षिकयुक्तं पद्मकेसरादि वास्तुकान्तं प्रयोगः ॥

लिह्याद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् ॥
पथ्यारजन्यहिंस्रा वा पलाण्डुं तद्वदेव वा ।
फलिनीलोद्ध्रखदिरशाल्मलीकोविदारजम् ॥
शिरीषशेलुककुभसिन्दुवारातिमुक्तजम् ।
पलाशयूथिकाशिग्रुमधूकासनजन्म च ॥
मधुना चूर्णितं पुष्पमेकत्र पृथगेव वा ।
पुष्पैरेभिर्विपक्वं च सक्षौद्रं माहिषं घृतम् ॥
लिह्यात् क्षौद्रेण पथ्यां वा किञ्जल्कं कमलस्य वा
लाजाः भृङ्गाटकं मुस्तं खर्जूरं कृष्णमृत्तिकाम्
क्षीरिवृक्षाङ्कुरान् द्राक्षां तवक्षीरीं सितोपलाम्

गैरिकं मधुकं लोध्रं शंखं शम्बूकमञ्जनम् ॥
तण्डूलीयकमूलं वा बीजं वा वास्तुकोद्भवम्
पटोलमालतीनिम्बचन्दनद्वयपद्मकम् ॥

लोध्रो वृषस्तण्डुलीयः कृष्णा मृन्मदयन्तिका
शतावरी गोपकन्याकाकोल्यौ मधुयष्टिका ॥
रक्तपित्तहराः क्राथास्त्रयः समधुशर्कराः ।
सक्षौद्रं ग्रथिते रक्ते लिह्यात् पारावताच्छकृत्॥

गवाश्वस्य शकृद्रसो घृतमाक्षिकाभ्यां लेहप्रयोगः । पथ्यादीनां तद्वन्मधुसर्पिर्भ्यां प्रयोगः । तथा पलाण्डोः । फलिन्यादीनां यथासंभवं पुष्पं पृथङ्मिश्रितं वा चूर्णितं मधुना प्रयोगः । अथवा त्रिभिः श्लोकार्धैस्त्रयः प्रयोगाः । सुबोधम् ॥

अतिनिस्रुतरक्तो वा क्षौद्रेण रुधिरं पिबेत् ।
जाङ्गलं भक्षयेद्वाजं मासं पित्तयुतं यकृत् ॥

लोध्रकालीयकोशीरफलिनीशङ्खगैरिकम् ।
पटोलपत्रं दुस्पर्शा समंगा शारिवालता ॥
त्वग्जंबुवेतसाश्वत्थद्वयाह्वोदुम्बरार्जुनात् ।
किराततिक्तक्रमुकमुस्तकट्फलपद्मकम् ॥
प्रपौण्डरीकह्रीबेरकमलोत्पलपर्पटम् ।
चन्दनेन पृथग्युक्तं समस्तं वा सशर्करम् ॥
फाण्टीकृतं शृतं शीतं चूर्णं वा तण्डुलाम्भसा।
पीतमाशु जयत्यस्रं तृड्दाहतमकानपि ।

स्रुतमेव निस्रुतम् । जांगलजीवप्रभवत्वाद्रुधिरं जाङ्गलम् । अथवा आजं यकृदपक्वं सजातीयपित्तसंयुक्तं भक्षयेत् । लोध्रादिभिर्दोषाद्यपेक्षं पृथङ्मिश्रैर्वा फाण्टं शृतं शीतं वा चूर्णं वा तण्डुलाम्बुमिश्रं सर्वमेव चन्दनशर्कराभ्यां संयुक्तं पीतमस्रादीनाशु जयति । अर्जुनान्तानां त्वचा संबन्धः ॥

चन्दनोशीरजलदलाजमुद्गकणायवैः ॥
बलाजले पर्युषितैः कषायो रक्तपित्तहा ।

बलायाः क्राथस्य षट्सु पलेषु चन्दनादीनां पलं रात्रिस्थितं द्वितीयेऽह्नि प्रातः कषायो रक्तपित्तघ्नः ॥

प्रसादश्चन्दनाम्भोजसेव्यमृद्भृष्टलोष्टज. ॥
सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित्

चन्दनाम्भोजादीनां प्रसादो विचूर्ण्य जलेनालोड्य स्थापितानामुपरिभवो भागः सितादिमान् शोणितस्यातिप्रवृत्तिजित् ।.

तद्वदच्छः सितालोध्रमधुकोशीरचन्दनात् ॥
मृच्छ्यामाशारिबामुस्ताधातकीयष्टिकान्वितात्

सितादीनामच्छः प्रसादस्तद्वत् गुणैश्चन्दनादिप्रसादवत् । सुशीतः ससिताक्षौद्रश्च सन्नित्यर्थः ॥

वैडूर्यमुक्तामृच्छंखगैरिकामलकोदकम् ॥
मधूदकं रसं चेक्षोः पिबन् जयति शोणितम् ।

वैडूर्यादीनां मिश्रितानामुदकप्रयोगस्तथा । मधूदकं तथेक्षुरसश्च ॥

आपोथ्य वा नवे कुम्भे प्लावयेदिक्षुगण्डिकाः
स्थितं तत् गुप्तमाकाशे रात्रिं प्रातः स्रुतं जलम्
मधुमद्विकचाम्भोजकृतोत्तंसं च तद्गुणम् ।
त्रपुसीमूलकल्कं वा सक्षौद्रं तण्डुलाम्बुना ॥
पिबेत् करञ्जबीजं वा तेनक्षौद्रसितायुतम् ।
लोद्ध्रचन्दनयष्ट्याह्वं तेन यष्ट्याह्वमेव वा ॥

अथवा इक्षुगण्डिका आपोथ्य जर्जरीकृत्य प्लावयेत बहुना जलेनाभिषुणुयात् । तज्जलमाकाशे लम्बशिक्ये रात्रिं सुरक्षितं स्थितं प्रांतर्वस्त्रादिना स्रुतं समकरन्दविकसितजलजकुसुमकृतोत्तंसं सत् तद्गुणं शोणितं जयतीत्यर्थः । उत्तंसं शेखरम् । सुबोधम् । तेनेत्युभयत्र तण्डुलाम्बुना ॥

नीलोत्पलं सिता यष्टी मधुकं पद्मकेसरम् ।
छिन्नोद्भवा च शीतोऽयं कषायो रक्तपित्तजित्॥
ये च पित्तज्वरे प्रोक्ताः कषायास्तांश्च योजयेत्

नीलोत्पलादिभिः शीतकषायः । छिन्नोद्भवा गुळूची । सुबोधम् ॥

कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे ॥
रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः ।
युञ्ज्याच्छागं शृतं तद्वत् गव्यं पञ्चगुणेऽम्भसि
पञ्चमूलेन लघुना शृतं वा ससितामधु ।
जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः ॥
पृथक् पृथक् शृतं शीतं सघृतं सितयाथवा ।
क्षीरेण वमनीपुष्पं मधुकं मधुशर्कराम् ॥

कषायैर्विविधैरित्यादिना क्षीरविषयो दर्शितः । तद्वदिति गव्यं पयः शृतमेतल्लघुपञ्चमूलशृतमेव ससितामधु । पृथक् पृथगिति कदाचिज्जीवकेन कदाचिदृषभकेणेत्येवं सर्वैः । अथवा शर्करया शृतं सर्वथा सघृतम् । वमनी पुष्पादिकं पृथक् क्षीरेण चूर्णितमालोड्य । वमनी छर्दनफला वाट्या कार्पासनाम्निका ॥

गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः ।
हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम् ॥
विण्मार्गगे विशेषेण हितं मोचरसेन तु ।
वटप्ररोहैः शुङ्गैर्वा शुण्ठ्युदीच्योत्पलैरपि ॥
रक्तातिसारदुर्नामचिकित्सां चात्र कल्पयेत् ।

गोकण्टकशतावरीभ्यां शृतमथवा पर्णिनीभिः । पर्णिन्यो मुद्गमाषसालपृश्निपर्ण्यः । मोचरसेन शृतं पय इति संबन्धः । निर्यासो यस्तु शल्मल्याः स मोचरससंज्ञितः । प्ररोहोऽङ्कुरः । शुङ्गं प्रथमोद्भिन्नं किसलयम् । तच्च प्रकरणाद्वटस्यैव । अत्र च रक्तपित्ते दोषाद्यपेक्षया रक्तातिसारचिकित्सां रक्तार्शश्चिकित्सां च कल्पयेत् ॥

पीत्वा कषायान् पयसा भुञ्जीत पयसैव तु ।
कषाययोगैरेभिर्वा विपक्वं पाययेत् घृतम् ॥

कषायांश्चूर्णादीन् पयसा पीत्वा पयसैव भुञ्जीत । यथादोषादि च पूर्वोक्तैर्नानाविधकल्पनोपयोगैरौषधैर्विपक्वं घृतं पाययेत् ॥

समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि ।
पक्त्वाष्टांशावशेषेण घृतं तेन विपाचयेत् ॥

तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम् ।
पित्तगुल्मज्वरश्वासकासहृद्रोगकामिलाः ॥
तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत् ।

समूलशाखस्यार्द्रवृषस्योलूखले क्षुण्णस्य षोडशपलान्यष्टाविंशेन शतेन जलपलानां पक्त्वा पक्वस्य च षोडशपलानि गृहीत्वा तेन तावदेव घृतं घृताच्चतुर्थांशेन शौनकमतेन षष्ठांशेन वा वृषपुष्पाणि गर्भे दत्वा विपचेत् । सुबोधम् ॥

पलाशवृन्तस्वरसे तद्गर्भं च घृतं पचेत् ।
सक्षौद्रं तच्च रक्तघ्नं तद्वद्वत्सकसाधितम्
लोध्रोत्पलसमंगाभिस्तथैव त्रायमाणया ।

पलाशवृन्तानां स्वरसः सामान्यपरिभाषया घृताच्चतुर्गुणस्तेषामेव गर्भचूर्णस्य घृताच्चतुर्थांशत्वं शौनकमते अष्टमांशं कल्कस्य । अनेनैव विधिना वत्सकलोद्ध्रादित्रायमाणासाधितानि त्रीणि घृतानि । वृन्तं पत्रम् ॥

लाजगोधूममधुकासिताचूर्णं पयोद्रवम् ।
घृतेनोत्कारिकांकृत्वाखादेत्पित्तास्रवारिणीम्

उत्कारिका या पिष्टमालोड्य संस्वेद्य च पिण्डीक्रियते ॥

रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे ।
लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनाळजम् ॥
मृणाळाम्भोजकिञ्जल्कश्यामासनमधूकजम् ।
तद्वत् पृथक् पृथक् क्षारं—

कण्ठमार्गगे रक्ते पिच्छात्वादियुते नीलोत्पलनाळजः क्षारो मधुसर्पिर्भ्यां लेह्यः । पिच्छा मण्डप्रायम् । ग्रथितं संहतम् । मृणाळादीनामन्यतमस्य क्षारो दोषाद्यपेक्षया प्रयुक्तस्तद्वत् सर्पिर्मधुभ्यां लीढ उत्पलनाळजवद्विज्ञेयः ॥

—घृतं क्षीरेण साधयेत् ॥
पिष्टैरभीरुकाकोळीमेदावृक्षाम्लदाडिमैः ।
फलपूरकमूलेन विदार्या मधुकेन च ॥
तद्विबन्धज्वरानाहशूलकासास्रपित्तजित् ।

क्षीरेण समघृतेन । पुनर्वसुमते चतुर्थांशेनाभीर्वादिकल्केन घृतं पचेत् जलं विना द्रव्याणि न संस्कारयोग्यानि भवन्तीत्यनुक्तावप्याचार्याः सर्पिषा समं जलमिच्छन्ति । अभीरुः शतावरी । वृक्षाम्लं तिन्त्रिणीकम् । फलपूरकं बीजपूरकम् ॥

पञ्चभिः पञ्चमूलैश्च सिद्धमाद्यैस्तदर्थकृत् ॥
गुदागमे विशेषेण शोणिते वस्तिरिष्यते ।

आद्यानि पञ्च पञ्चमूलानि महद्ध्रस्वमध्यजीवनतृणाख्यानि । तदर्थकृदिति विबन्धज्वरादिजित् । अत्र घृताच्चतुर्गुणं जलम् । पञ्चमूलकल्कश्च घृताच्चतुर्थांशेन । सुबोधम् ॥

मधुकाञ्जनमञ्जिष्ठामृणालोत्पलगैरिकैः ॥
सुवर्णलोध्रकालीयसमंगाम्बुजचन्दनैः ।
सौगन्धिकसिताशंखैः पिष्टैर्मधुघृतान्वितैः ॥
क्षीरेणास्थापयेदेनं स्नातं च शिशिराम्भसा ।

क्षीरेणैवाशयेच्छालींस्ततो मधुकसर्पिषा ।
कालेऽनुवासयेदेवमतिसारेऽपि दुस्तरे ॥
जीर्णेऽसृक्प्रबले कुर्याद्विरेके चातियोगिनि ।
विदार्यादिगणेनेष्टं शृतं वास्थापने पयः ॥
सक्षौद्रशर्करासर्पिः सर्पिश्चैवानुवासने ।
मूत्राशयस्थं शमयेद्रक्तमुत्तरवस्तिभिः ॥
ईदृशैरेव तद्वच्च प्रदरेऽपि विधिः स्मृतः ।
छेदभेदादिभिश्चातिप्रवृत्ते शुद्धशोणिते ॥
विशेषात् प्रदरस्योक्तं योनिरोगेषु चौषधम् ।

मधुकादिभिः पिष्टैर्घृतमाक्षिकयुक्तैश्च क्षीरेण सहास्थापयेत् । सुवर्णं पद्मकम् । कालीयं पीतचन्दनम् । समंगा मञ्जिष्ठा । सौगन्धिकमत्र पद्मकम । अंबु वालकम् । अनेनास्थापितं स्नाताशितं च मधुयष्ट्या संयुक्तेन सिद्धेन वा सर्पिषा सूत्रोक्तेन विधिना कालेऽनुवासयेत् । अयं च उक्तो बृंहणो रक्तपित्तक्रमः स पुराणे रक्ताधिकेऽतिसारे विरेचनातियोगे च विधेयः । सुबोधम् । सक्षौद्रेत्यादि पयोविशेषणम् । ईदृशैरेवेति य एव वस्तयो गुदेनोक्तास्त एव मेढ्रेण योज्या इत्यर्थः । अयं च मेढ्रप्रवृत्तरक्तनिबर्हो विधिः प्रदरेऽपि योनिप्रवृत्ते रजसि गुह्यरोगे वक्ष्यमाणे विधेयः । तथायमेव रक्तपित्तविधिर्बृंहणः छेदाभिघातादिनातिप्रवृत्ते शुद्धशोणिते च विधेयः । प्रदरस्य च योनिप्रवृत्तस्य च रक्तस्य योनिरोगोक्तं रक्तशमनौषधं विशेषाद्विशेषतः ॥

घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत् ।
कषाययोगानपूर्वोक्तान्क्षीरेक्ष्वादिरसाप्लुतान् ।
क्षीरादीन् ससितं तोयं केवलं वा हितं जलम् ।
रसो डाडिमपुष्पाणामाम्रास्थ्नः शाद्वलस्य च ।

घ्राणप्रवृत्ते शुद्धे रक्ते नस्यमनुषेचयेत् । किमित्याह । पूर्वोक्तांश्चूर्णादिकषाययोगान् क्षीरेक्ष्वाद्यन्यतमरसेनाऽऽलोडितानथवा क्षीरेक्षुरसादीन् सशर्करांस्तोयं वा सशर्करं केवलमेव वा तोयम । सुबोधम् ॥

कल्पयेच्छीतवर्गं च प्रदेहाभ्यञ्जनादिषु ।
यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् ॥
रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत् ।

इति रक्तपित्तचिकित्सितं नाम
तृतीयोऽध्यायः ॥

शीतो वर्गः पित्तशमनो दूर्वादिः शोधनादिगणपठितः अथवा महाकषायसंग्रहपठितः पकलाजादिर्दाहहा दशकः शीतः । सुबोधः श्लोकः ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चिकित्सिते तृतीयोऽध्यायः ॥

---

# चतुर्थोऽध्यायः ।

---

क्रमप्राप्तस्य कासस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातः कासचिकित्सितं व्याख्यास्यामः । इति हस्माहुरात्रेयादयो महर्षयः ॥

निदानोक्तक्रमस्याश्रयणात् प्रथमं केवलेत्यादिना वातकासचिकित्सोच्यते ॥

केवलानिलजं कासं स्नेहैरादावुपाचरेत् ।
वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः ॥
लेहैर्धूमैस्तथाभ्यङ्गस्वेदसेकावगाहनैः ।
वस्तिभिर्बद्धविड्वातं सपित्तं त्वौर्ध्वभक्तिकैः
घृतैः क्षीरैश्च सकफं जयेत् स्नेहविरेचनैः ।

स्नेहैः घृतादिभिर्यथायोग्यम् । वातघ्नानि शोधनादिगणपठितानि भद्रदारुनतकुष्ठादीनि । पेयादिभिरवगाहान्तैर्घृतादियोगात् स्निग्धैः । अभ्यङ्गस्यातिशयप्रदर्शनार्थं विशेषणम् । विड्बद्धा कठिना । वातो विबद्ध असम्यग्वाही । घृतैरेवौर्ध्वभक्तिकैः क्षीरैरिति सामान्येन । सपित्तं सकफं चेत्यनिलजकासविशेषणम् ॥

गुडूचीकण्टकारीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥

गुडूचीकण्टकार्योः षष्टिः पलानि ततो निष्पीडितो रसो यथासंभवं तस्यालाभे काथकल्पनया क्वाथः ॥

क्षाररास्नावचाहिङ्गुपाठायष्ठ्याह्वधान्यकैः ।
द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत् ॥
दशमूलस्य निर्यूहे पीतो मण्डानुपायिना ।
सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ॥

क्षारादीनां पञ्चकोलानां प्रत्येकमर्धकर्षः । दशमूलकाथो घृताच्चतुर्गुणः । सह श्वासेन वर्तते यः कासः स तथोक्तः ॥

काश्मर्यत्रिफलाव्योषपशटीद्राक्षापरूषकम् ।
द्वे पाठे देवदार्वृद्धिस्वगुप्ताग्निकगोक्षुरम् ॥
व्याघ्रीतामलकीमेदाकाकनासाशतावरीः ।
विदारी च घृतप्रस्थः कर्षांशैस्तैर्विपाचितः ॥
क्षीरेण च जयत्याशु ज्वरकासहलीमकान् ।
गुल्मारुचियकृत्प्लीहशिरोहृत्पार्श्ववेदनाः ॥
कामिलार्शोनिलाष्ठीलाक्षतशोफक्षयांश्च सः ।

काश्मर्यादिभिः कर्षांशैर्घृतप्रस्थं तद्वत् समेन क्षीरेण युक्तं पचेत् । अत्र घृतसमं जलमिच्छन्ति । अग्निकः चित्रकः । तामलकी ताली । काकनासा काकतुण्डफला । शोषो मांसक्षयः । क्षयो राजयक्ष्मा ॥

द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः ।
पलोन्मिता द्विकुडवं कुलत्थं बदरं यवम् ॥
तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम् ।
समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत् ॥
प्रयुक्तं वातरोगेषु पाननावनवस्तिभिः ॥
पञ्चकासान् शिरःकम्पं योनिवंक्षणवेदनाम् ।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत्॥

रास्नादीनां द्वादशपलानि कुलत्थादीनां प्रत्येकमष्टौ पलानि आजमांसस्य पलानि पञ्चाशदिति पानीयपलशतपञ्चकेन सद्वादशपलेन साधयेत् । तेनेति सिद्धेन साधिप्रयोगान्मांसवन्मांसपाकावधिरस्य सिद्धता । चरके तु पठितं पादशेषेण तेन चेति । जीवनीया उक्ताः । तैः पलांशैः समेन क्षीरेण युक्तं घृताढकं पचेत् । समीक्ष्येति बृह-

णीयत्वं सम्यग्विकल्प्य । सर्वाङ्गरोगा नानाविधा वातव्याधयः । ऊर्ध्वे प्रवृत्तोऽनिल ऊर्ध्वानिलः । सहशब्देन तावपि जयेदित्युक्तम् ॥

विदार्यादिगणक्राथकल्कसिद्धं च कासजित् ।

विदार्यादिगणस्य क्राथः स्नेहाच्चतुर्गुणः कल्कश्चतुर्थांशः । इदं च घृतं वातपित्तकासे विधेयम् ॥

अशोकबीजक्षवकजन्तुघ्नाञ्जनपद्मकैः ॥
सविडैश्च घृतं सिद्धं तच्चूर्णं वा घृताप्लुतम् ।
लिह्यात् पयश्चानुपिबेदाजं कासाभिपीडितः ॥

अशोकबीजादीनि घृताच्चतुर्थांशानि । पानीयं चात्र घृतसममिच्छन्ति । तदित्यशोकबीजादिपरामर्शः ॥

विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम्
भार्ङ्गीक्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ॥
सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु ।

विडङ्गादिचूर्णोपयोगे घृते मात्राशब्दः स्तोकपर्यायः । तच्च विडङ्गादिचूर्णं वातकासे सश्लेष्मणि हितं श्वासादिषु च ॥

दुरालभां शृङ्गिवेरं शठीं रास्नां सितोपलम् ।
लिह्यात् कर्कटशृङ्गीं च कासे तैलेन वातजे ॥
दुस्पर्शां पिप्पलीं मुस्तं भार्ङ्गीं कर्कटकीं शटीम्
पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत् ॥

तद्वत् सकृष्णां शुण्ठीं च सभार्ङ्गीं तद्वदेव च ।
पिबेत् कृष्णां च कोष्णेन सलिलेन ससैन्धवाम्
मस्तुना ससितां शुण्ठीं दध्ना वा कणरेणुकाः
पिबेत् बदरमज्ञो वा मदिरादधिमस्तुभिः ॥
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ।

दुरालाभादीन् कर्कटशृङ्गीसहितांस्तैलेन लिह्याद्वातजे कासे । द्वितीयं दुरास्दर्शाद्यं सुबोधम । तद्वदिति कृष्णाशुण्ठ्योः पुराणगुडतैलाभ्यां प्रयोगः । तद्वदेव भार्ङ्गीशुण्ठ्योः । सैन्धवपिप्पल्योरुष्णोदकेन प्रयोगः । सिताशुण्ठ्योर्मस्तुना । दध्ना कणरेणुकाः पिप्पलीबीजानि । तथा बदरमज्ञो रेणुकाः मदिरया वा दध्ना वा मस्तुना वा । पिप्पलीनां कल्को जलपिष्टः सैन्धवयुक्तेन घृतेन भृष्टः क्रियते ॥

कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत्
हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः ॥

स्नैहिकं धूमविधावुक्तम् । हिध्माश्वासे ये धूमा वक्ष्यन्ते तान् सेवेत क्षीरमांसरसाशनः सन् ।

ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान् ।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥

ग्राम्यादिमांसकृतै रसैर्माषात्मगुप्ताकृतैर्वा यूषैः शालियवादीन् हितान् पथ्यान् भोजयेत् ॥

यवानीपिप्पलीबिल्वमध्यनागरचित्रकैः ।
रास्नाजाजीपृथक्पर्णीपलाशशटिपौष्करैः ॥
सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत्
कटीहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशिनीम् ॥
दशमूलरसे तद्वत् पञ्चकोलगुडान्विताम् ।
पिबेत् समतिलां पेयां क्षैरेयीं वा ससैन्धवाम्
मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैन्धवाम् ॥

अनिलजे कासे यवान्यादिभिः सिद्धां डाडिमादिभिरम्लां च पेयां पिबेत् । दशमूलरसे पञ्चकोलगुडसंयुतां तद्वत् कटीरुगादिनाशिनीमित्यर्थः । समशालितिलां ससैन्धवामथवा क्षैरेयीम् । मत्स्यादिभिर्मांसैः पेया घृतसैन्धवयुक्ता ॥

वास्तुकोवायसीशाकं कासघ्नः सुनिषण्डकः ।
कण्टकार्याः फलं पत्रं बालं शुष्कं च मूलकम्
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ।
दधिमस्त्वारनालाम्लफलाम्बुमदिराः पिबेत् ॥

वास्तुकादिशाकं कासे पथ्यम् । स्नेहास्तैलादयः तैलपूर्वाः । भक्ष्या नानाविधाः क्षीरादीनां पिबेदित्यनेन संबन्धः । गुडेन कृतं गौडिकम् । सुबोधम् ॥

पित्तकासे तु सकफे वमनं सर्पिषा हितम् ।
तथा मदनकाश्मर्यमधुककथितैर्जलैः ॥
फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः ।

सकफे यत्र मुखेन कफप्रवृत्तिः तत्र वमनद्रव्ययुक्तेन सर्पिषा वमनम् । अथवा मदनादिकथितैर्जलैः । अथवा मदनमधुयष्ट्योः कल्को विदारीरसेन चेक्षुरसेन चेषद्युक्तः ॥

पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः ॥

तनुकफे पित्तकासे मधुरैरौषधैर्युक्तां त्रिवृताम् । घने कफे तु तिक्तकैर्युक्ताम् ॥

हृतदोषो हिमं स्निग्धं स्वादु संसर्जनं भजेत् ।
घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् ॥

तया च त्रिवृतया हृतदोषः सन् शीतादिगुणं संसर्जनं पेयादिक्रमं भजेत् । घनकफे पित्तकासे शीतरूक्षादिकं तिक्तोपसंहितं मिश्रितम् ॥

पिप्पलीमुस्तयष्ट्याह्वद्राक्षामूर्वामहौषधम् ।
लाजामृताफलद्राक्षात्वक्क्षीरीपिप्पलीसिताः ॥
दुस्पर्शाकर्कटीशुण्ठीशटीद्राक्षासितावलाः ।
निदिग्धिकामूलफलं वटबीजं रसाञ्जनम् ॥
खर्जूरं पिप्पली वांशी श्वदंष्ट्रा चेति पञ्च ते ।
घृतक्षौद्रयुता लेहाः श्लोकार्धैः पित्तकासिनाम्
पयोऽनुपानाः शृङ्गीं वा लिह्यात्साज्यसितामधुम्

पिप्पलीलाजदुस्पर्शानिदिग्धिकाखर्जूरादिभिः पञ्चभिरर्धश्लोकैः पञ्च घृतक्षौद्राभ्यां युक्ता लेहाः पित्तकासिनामुक्ताः । महौषधं शुण्ठी । अमृताफलमामलकफलम् ।

कर्कटी कर्कटशृङ्गी । वांशी तुकाक्षीरी । शृङ्गया आज्यसितामधुनो दोषाद्यपेक्षया मात्रा ॥

लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः ।
सकफे साब्दमरिचः सघृतः सानिले हितः ॥

एवं पित्तकासे सितादिभिर्लेहः । स कफे पैत्ते मुस्तमरिचाभ्यां युक्तः सितादिभिर्लेहः । सानिले तु पैत्ते अब्दमरिचाभ्यां विना सघृतः सितादिभिर्हितः ॥

मृद्वीकार्धशतं त्रिंशत् पिप्पलीः शर्करापलम् ।
लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम् ॥
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः ।
लाजमुस्तशटीरास्नाधात्रीफलबिभीतकैः ॥
शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा ।

मृद्वीकाफलानि पञ्चाशत् फलानां संख्याशब्देन केवलेन प्रयोगे उक्तमानं न नेच्छन्ति । पिप्पलीफलानि त्रिंशत् । शर्करायाः पलमित्येतन्माक्षिकेणावलेहयेत् । अथवा पुंगवस्य क्षीरवृत्तेः संबन्धि यः शकृतो रसः तं मधुना लेहयेत । त्वगादीनां शर्करान्तानां क्षौद्रसर्पिर्भ्यां लेहो हृद्रोगकासयोर्हन्ता ॥

पिप्पल्यामलकद्राक्षालाजलाक्षासितोपलाः ।
संचूर्ण्य पक्त्वा पयसा लिह्यात् क्षौद्राष्टभागिकाः

पिप्पल्यादीनां चूर्णं क्षीरेण पक्त्वा आ लेहत्वप्राप्तेस्ततश्चाष्टभागं क्षौद्रं दत्वा लिह्यात्।

विदारीक्षुमृणाळानां रसान् क्षीरं सितोपलाम्
पिबेत् क्षौद्रेण संयोज्य पित्तकासमपोहति ॥

विदार्यादीनां रसान् क्षीरं सितोपलां च समभागानि दोषाद्यपेक्षमात्रेण क्षौद्रेण संयोज्य पिबेत । तत् पीतं पित्तकासमपोहति ॥

मधुरैर्जाङ्गलरसैर्यवश्यामाककोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥

तत्र च पित्तकासे यवादयो जाङ्गलानां मांसानां रसैर्मधुरैरम्लरहितैः सहमात्रया हितास्तथा मुद्गादीनां यूषैः शाकैश्च पटोलादिभिस्तिक्तकैः ॥

घनश्लेष्माणि लेहाश्च तिक्तकामधुसंयुताः ।
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः ॥
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसः पयः ।

घनश्लेष्माणि पित्तकासे तिक्तकैर्द्रव्यैर्मधुसहिता लेहाश्च हिताः । तनुकफे पैत्ते शालयः षष्टिकाश्च रसयूषशाकादिभिः । सुबोधम् ॥

काकोळीबृहतीमेदाद्वयैः सवृषनागरैः ॥
पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत् ।

काकोळ्यादीनां क्वाथेन पित्तकासिनो मांसरसादीन् कल्पयेत् । कल्पयेदित्यनेन चूर्णितैरपि संयुक्ता रसादय इष्यन्ते ॥

द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले ।
तेन क्षीरं शृतं शीतं पिबेत् समधुशर्करम् ॥
साधितां तेन पेयां वा सुशीतां मधुनान्विताम्

द्राक्षादिक्काथेन समं क्षीरं शृतं शीतं सन्मधुशर्कराभ्यां सह पिबेत् । तेन वा द्राक्षादिकथितजलेन साधितां पेयां केवलेन मधुनान्वितां पिबेत् ॥

षडीह्रीबेरबृहतीशर्कराविश्वभेषजम् ।
पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्छितम् ॥

जलेन षड्यादिकं पिष्ट्वा तद्रसं वस्त्रपूतं घृतमिश्रितं पिबेत् ॥

महिष्यजावीगोक्षीरधात्रीफलरसैः समैः ।
सर्पिः सिद्धं पिबेत्—

महिष्यादीनां क्षीराणि धात्रीफलानां च रस इति पञ्चसमानि तावच्च सर्पिर्विपक्कं सिद्धं पिबेत् पित्तकासे ॥

—तद्वन्मधुरेण गणेन वा ।
क्वाथीकृतेनेक्षुरसे क्षीरयुक्तेन साधितम् ॥
सशर्करं पिबेत् प्रातर्लिह्याद्वा माक्षिकान्वितम् ।

तथा मधुरगणस्य क्काथेन स्नेहसमेन क्षीरेण च स्नेहसमेन स्नेहाच्चतुर्गुण इक्षुरसे सर्पिः साधितं शर्करया सह प्रातः पिबेत् । मधुरो गणो रसभेदीयोक्तो मधुरस्कन्धः । अथवैतत् सर्पिः सशर्करमेव प्रातर्माक्षिकान्वितं लिह्यात् स्यादनं सत् ॥

क्षीरिवृक्षाङ्कुरक्काथे पक्कं क्षीरसमं घृतम् ।
पाययेत् पित्तकासार्तं मधुना वावलेहयेत् ॥

क्षीरिवृक्षाङ्कुरक्काथः स्नेहाच्चतुर्गुणः । सर्वसर्पींषि स्यानानि लेह्ययोगीनि भवन्ति ॥

मेदां विदारीं काकोलीं स्वयंगुप्ताफलं बलाम्
शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम् ॥
कल्कीकृत्य पचेत् सर्पिः क्षीरेणाष्टगुणेन तत् ।
पानभोजनलेहेषु प्रयुक्तं पित्तकासजित् ॥

मेदादीनि स्नेहाच्चतुर्थांशेन । जलमौषधस्य वीर्यग्रहणाय स्नेहसममष्टगुणेन क्षीरेण सर्पिः पचेत् । तत् पक्कं पानादिषु प्रयुक्तं पित्तकासनुत् ॥

लिह्याद्वा चूर्णमेतेषां कषायमथवा पिबेत् ।

एतेषां वानन्तरोक्तानां घृतद्रव्याणां चूर्णं लिह्यान्मधुनेत्यर्थाल्लभ्यते । अथवा यैरेव द्रव्यैर्घृतान्युक्तानि तेषां कषायं पिबेदिति पित्तकासः ।

कफकासी पिबेदादौ सुरकाष्ठात् प्रदीपितात् ।
स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम् ।
स्निग्धं विरेचयेदूर्ध्वमधो मूर्ध्नि च युक्तितः ॥
तीक्ष्णैर्विरेकैर्बलिनं—

कफकासीत्यादि सुबोधम् । सुरकाष्ठं देवदारु । स्निग्धमित्यनेनैव स्नेहेन त्रिभि-

मार्गैर्युक्त्या वातरक्षादिरूपया । विरेचयेत ऊर्ध्वमिति वमनेन । अध इति विरेचनेन । मूर्ध्नीति नस्येन । तीक्ष्णैः पुनर्द्रव्यैस्त्रिधापि बलिनमेव विरेचयेत् । अबलं तु मृदुभिर्विरेकैरित्यर्थः ॥

—संसर्गीं चास्य योजयेत् ।
यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः ॥
कासमर्दकवार्ताकव्याघ्रीक्षारकणान्वितैः ।
धान्वबैलरसैः स्नेहैस्तिलसर्षपनिम्बजैः ॥

अस्य च विरिक्तस्य कासिनः संसर्गीं पेयादिक्रमाख्यां योजयेत् । केनेत्याह । यवाद्यन्नैः । किंभूतैरुष्णै रूक्षैश्च तथा कटुभिर्मरिचादिभिरुत्कटैः कासमर्दादिभिर्नानाविधेन प्रकारेणान्वितैस्तथा धान्वैर्जाङ्गलै रसैर्बैलैश्च विलेशयप्रभवैस्तिलादिजैश्च स्नेहैः ॥

दशमूलाम्बु घर्माम्बु मद्यं मध्वम्बु वा पिबेत् ।
मूलैः पौष्करशम्याकपटोलैरन्वितं निशाम् ॥
पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु ।

तृषितश्च दशमूलाम्ब्वादिकं पिबेत । घर्माम्बूष्णोदकम् । पौष्करादिमूलैः सकलां रात्रिं समन्वितं वारि श्वोभूतेषु त्रिषु कालेष्वन्नस्य पिबेत् । भोजनस्यारम्भमध्यपर्यवसानेष्वित्यर्थः । पूर्वप्रयोगापेक्षया विकल्पः ॥

पिप्पलीपिप्पलीमूलं शृङ्गिवेरं विभीतकम् ॥
देवदार्वभया मुस्तं पिप्पलीविश्वभेषजम् ।
गुळूची पिप्पलीभार्ङ्गीशृङ्गीकर्कटकस्य च ॥
व्योषदारुविळङ्गानि त्रिफलाशर्कराबलाः ।
निदिग्धिकाया मूलत्वङ्मारिचैः सहयोजिता ॥
शिखिकुक्कुटपिञ्छानां मषी क्षारो यवोद्भवः ।
विशालापिप्पलीमूलं त्रिवृता च मधुद्रवाः ॥
कफकासहरा लेहाः सप्तश्लोकार्धयोजिताः ।
मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम् ॥
पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान् ।
कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च ॥

पिप्पलीदेवदारुगुळूचीव्योषनिदिग्धिकाशिखिपिञ्छविशालादिभिः श्लोकार्धैः सप्त माक्षिकद्रवा लेहाः कफकासहरा भवन्ति । मरिचैः फलैः सह योजिता निदिग्धिकामूलत्वक् । सुबोधम् । जोङ्गकं कृष्णागरु । कासघ्नादीनां षष्ठ्यन्तानां पृथग्रसो विज्ञेयः कासघ्नः कासमर्दः । असित इति सुरसविशेषणम् ॥

देवदारुषडीरास्नाकर्कटाख्यादुरालभाः ।
पिप्पली नागरं मुस्तं पथ्याधात्रीसितोपलाः ॥
मधुतैलयुतावेतौ लेहौ वातानुगे कफे ।
विळङ्गं सैन्धवं हिङ्गु कुष्ठं व्योषं मनः शिलाम्
कासेश्वासेचहिध्मायांलिह्यात्क्षौद्रघृताप्लुतम् ।

देवदार्वादिभिः पिप्पल्यादिभिश्च द्वौ तैलमाक्षिकयुतौ लेहौ वातानुगे कफे कफकासे भवतः । विळङ्गादि चूर्णं क्षौद्रघृताप्लुतं कासादिके लिह्यात् ॥

गुळक्षारोषणकणाडाडिमं श्वासकासजित् ।
क्रमात्पलद्वयार्धाक्षकर्षार्धाक्षपलोन्मितम् ॥
द्वे पले ऽडिमादष्टौ गुळाद्व्योषात् पलत्रयम् ।
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ॥

गुडादिकं क्रमात् पलद्वयादिरूपोन्मानमितं श्वासकासजित् । गुळस्य पलद्वयम् । यवक्षारस्यार्धकर्षः । मरिचस्य कर्षः । पिप्पलीनामर्धकर्षः । डाडिमस्य पलमिति क्रमार्थः सुबोधम् ॥

पाठाशुण्ठीषडीमूर्वागवाक्षीपिप्पलीघनम् ।
पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युतं पिबेत्
तद्वन्मुस्ताषडीशुण्ठीनागरातिविषाभयाः ।

पाठादिकं श्लक्ष्णं पिष्ट्वा उष्णाम्बुनालोड्यानु च दोषाद्यपेक्षामात्राभ्यां हिङ्गुसैन्धवाभ्यां च संयोज्य पिबेत् प्रकरणात् कफकासे । मुस्तादिकं तद्वत् पिष्ट्वा घर्माम्बुना हिङ्गुसैन्धवाभ्यां युक्तमित्यर्थः ॥

पिबेज्ज्वरोक्तं पथ्यादि सश्रृङ्गीकं च पाचनम्
अथवा दीप्यकत्रिवृद्विशालाघनपौष्करम् ॥
सकणं कथितं मूत्रे कफकासी जलेऽपि वा ।

ज्वरोक्त पथ्यादि "रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनं अभयापिप्पलीमूलशम्याककटुकाघनं" तत् सश्रृङ्गीकं पिबेत् । दीप्यकादिकं पिप्पल्यन्तं गोमूत्रे कथितं कफकासी पिबेत् ॥

तैलभृष्टं च वैदेहीकल्काक्षंससितोपलम् ॥
पाययेत् कफकासघ्नं कुलत्थसलिलाप्लुतम् ।
सौवर्चलाभयाधात्रीपिप्पलीक्षारनागरम् ॥
चूर्णितं सर्पिषा वातकफकासहरं पिबेत् ।

वैदेह्याः पिप्पल्याः कल्कस्याक्षं कर्ष तैलेन भार्जितं सत् शर्करया दोषमात्रया युक्तं कुलत्थकथितसलिलेन पाययेत् तद्धि कफकासघ्नम् । सौवर्चलादिकं चूर्णितं घृतेनालोड्य वातश्लेष्मकासे पिबेत् ॥

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ।
पुष्कराह्वषडीविल्वसुरसव्योषहिङ्गुभिः ॥
पेयानुपानं तत् सर्ववातश्लेष्मामयापहम् ।

द्रवपाठासंभवाच्च दशमूलरसस्याढको विज्ञेयः । दशमूलाढकः पुनर्घृतप्रस्थेनाभ्यक्ततामेव न प्राप्नोति । अक्षसमैः कार्षिकैः ॥

निर्गुण्डीपत्रनिर्याससाधितं कासजिद्घृतम् ॥
घृतं रसे विळङ्गानां व्योषगर्भं च साधितम् ।
पुनर्नवशिवाटिकासुरसकासमर्दामृता
पटोलबृहतीफणिज्जकरसैः पयःसंयुतैः ।
घृतं त्रिकटुना च सिद्धमुपयुज्य संजायते
न कासविषमज्वरक्षयगुदाङ्कुरेभ्यो भयम् ॥

निर्गुण्डीपत्राणां स्वरसः स्नेहाच्चतुर्गुणः स्नेहश्चतुर्थांशः । निर्गुण्डी शेफालिका । तस्या एव पत्रम् सुबोधम् ॥

समूलफलपत्रायाः कण्टकार्या रसाढके ।

घृतप्रस्थं बलाव्योषविलङ्गषडिडाडिमैः ॥
सौवर्चलयवक्षारमूलामलकपौष्करैः ।
वृश्चीवबृहतीपथ्यायवानीचित्रकार्धिभिः ॥
मृद्वीकाचव्यवर्षाभूदुरालंभाम्लवेतसैः ।
शृङ्गीतामलकीभार्ङ्गीरास्नागोक्षुरकैः पचेत् ॥
कल्कैस्तत् सर्वकासेषु श्वासहिध्मासु चेष्यते ।

कण्टकार्या रसो निष्पीडितः बलादीनि स्नेहाच्चतुर्थांशानि । मूलं पिप्पलीमूलम् । आमलकफलानि । पौष्करं पुष्करमूलम् । चरकविदः पठन्ति सौवर्चलयवक्षारपिप्पलीमूलपौष्करैरिति ते ह्यामलकानि न पठन्ति ॥

कण्टकार्यास्तुलां क्षुण्णां पक्त्वा द्रोणेऽम्भसः [पचेत् ।
तेनाढकेन क्वाथस्य घृतप्रस्थं पिचून्मितैः ॥
रास्नादुस्पर्शषड्ग्रन्थापिप्पलद्वियचित्रकैः ।
सौवर्चलयवक्षारकृष्णामूलैश्च तज्जयेत् ॥
कासश्वासकफष्ठीवहिध्मारोचकपीनसान् ।

कण्टकार्याः पलशतम् । जलद्रोणं सद्वादशपलानि पञ्चशतानि । क्वथितशेष आढकमष्टाविंशत्यधिकं पलशतम । रास्नादीनि कर्षोन्मितानि । षड्ग्रन्था शतपर्विका । कफष्ठेवः श्लेष्मोद्गिरणम् ॥

पचेद्व्याघ्रीतुलां क्षुण्णां वहेऽपामाढकस्थिते ॥
क्षिपेत् पूते तु संचूर्ण्य व्योषरास्नामृताग्निकान्
शृङ्गीभार्ङ्गीघनग्रन्थिधन्वयासान् पलार्धकान् ॥
सर्पिषः षोडशपलं चत्वारिंशत्पलानि च ।
मत्स्यण्डिकायाः शुद्धायाः पुनश्च तदधिश्रयेत्
दर्वीलेपिनि शीते च पृथग्द्विकुडवं क्षिपेत् ।
पिप्पलीनां तवक्षीर्या माक्षिकस्यानवस्य च ॥
लेहोऽयं गुल्महृद्रोगदुर्नामश्वासकासजित् ।

व्याघ्र्याः पलशतम् । अपां जलस्य वहः पलसहस्रद्वयमष्टचत्वारिंशदधिकम् । आढकमष्टाविंशत्यधिकं पलशतम् । पूतं स्रुतम् । ग्रन्थिः पिप्पलीमूलम । मत्स्यण्डिका खण्डादूना शर्करा । शुद्धा निर्मला । अधिश्रयणं पाकाय चुल्यामारोहणम् । पिप्पलीनां द्विकुडवमष्टौ पलानि । तद्वत्तुकाक्षीर्याः माक्षिकस्य द्विकुडुवं षोडशपलानि । अनवशब्देन तद्वत्सरकृतं प्रतिषिध्यते ॥

त्रिफलापिप्पलीपाठाशारिवाबृहतीद्वयम् ।
मरिचं पद्मकं मुस्तमुशीरं चाक्षसंमितम् ॥
पक्त्वा जलाढके पादशेषे क्षीरपलाष्टकम् ।
दत्वा गुळस्य च पलं पचेदादर्विलेपनात् ॥
लेहः कफोल्बणं कासं सर्वमेव नियच्छति ।
साधितं क्षीरमेभिर्वा तिलक्षौद्रयुतं पिबेत् ॥

त्रिफलादिके त्रिफलादयः कर्षप्रमाणाः । सुबोधम ॥

शमनं च पिबेद्धूमं शोधनं बहळे कफे ।

सर्वस्मिन् कफकासे शमनं धूमं पिबेत् । शमनः प्रायोगिको मध्य इति पर्यायाः । यदा तु कफकासे बहळो घनः कफो भवति तदा शोधनं धूमं पिबेत् ।

शोधनो विरेचनस्तीक्ष्ण इति पर्यायाः । एतौ धूमविधौ प्रदर्शितौ ॥

मनःशिलालमधुकमांसीमुस्तेऽङ्गुदीत्वचः ।
धूमं कासघ्नविधिना पीत्वा क्षीरं पिबेदनु ॥
निष्ठ्यूतान्ते गुळयुतं कोष्णं धूमो निहन्ति सः
वातश्लेष्मोत्तरान कासानाचिरेण चिरन्तनान्

मनःशिलादीनां धूमं कासघ्नधूमविधानेन पीत्वा क्षीरं पिबेत् । कासघ्नधूमविधानं तु "चूर्णं गुळिकां वा निर्धूमदीप्तखिरांगारपूर्णे सुसंस्थिते शरावे प्रक्षिप्यान्येन मूर्ध्नि प्रवृत्तच्छिद्रेण शरावेण पिधाय निधाय च तत्स्रोतसि नेत्रं मुखेनैव धूमं पिबेत्" उरःप्राप्तं च मुखेनैवोद्वमेत् प्रशान्ते च धूमे पुनः पुनः क्षिपेत् । पिबेत्तावदोषशुद्धेर्लाघवाद्वेति । एतच्च धूमविधौ व्याख्यातम् । तत्र च क्षीरं धूमात् निष्ठ्यूतस्य श्लेष्मणोऽन्ते गुळयुतमीषदुष्णं च पिबेत् ॥

प्रपौण्डरीकं मधुकं शार्ङ्गाष्ठालंमनःशिलाम् ।
मरिचं पिप्पलीं द्राक्षामेलां सुरसमञ्जरीम् ॥
कृत्वा वर्तिं पिबेद्धूमं क्षौमचैलानुवर्तिनीम् ।
घृताक्तामनु च क्षीरं पिबेत् तद्वत् गुळाम्बु वा

प्रपौण्डरीकादिभिः श्लक्ष्णपिष्टैः क्षौमचेलेन सह वर्तिं कृत्वा तां च घृताक्तां कृत्वा तत एव धूमं पिबेत् अनु च क्षीरं तद्वदिति निष्ठ्यूतान्ते गुळयुतं कोष्णं च । अथवा गुडाम्ब्वनुपिबेत् न तु तथाविधं क्षीरम् ॥

नेपाळीतालमरिचलाक्षाञ्जनकुटन्नटैः ।
उशीररोहिषफलद्रामिळीवंशलेखनैः ॥
पूर्वकल्पेन धूमोऽयं सानुपानो विधीयते ।
कार्पासास्थ्यश्वगन्धा च धूमः कासविनाशनः
कोशातकीफलान्मध्यैः पिबेद्वा समनःशिलैः ॥

नेपाळ्यादिभिः पूर्ववद्धूमः । नेपाळी मनःशिला । कुटन्नटं प्लवं धान्यं वितुन्नं परिपेलवम् । रोहिषं भूतिकम् । फलं मदनफलम् । द्रामिळी सूक्ष्मैला । वंशलेखनं वंशशिलातनुशकलं वदन्ति । सुबोधम् । कोशातकफलमज्जा मनःशिला च धूमम ॥

तमकः कफकासे तु स्याच्चेत् पित्तानुबन्धजः
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयत् ॥
कफानुबन्धे पवने कुर्यात् कफहरां क्रियाम् ।
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥
वातश्लेष्मात्मके शुष्के स्निग्धमार्द्रे विरूक्षणम्
कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम् ॥

इति कासचिकित्सितं नाम चतुर्थोऽध्यायः।

यत्र तु कफकासे पित्तानुबन्धात् तमकाख्यः श्वासः स्यात् तत्र कफकासे पित्तकासक्रियां यथावस्थं कुर्यात् । वातकासे तु कफानुबन्धे कफकासहरां क्रियां कुर्यात् । वातकफयोर्मिश्रितयोरपि पित्तानुबन्धे पित्तकासक्रियां कुर्यात् । सुबोधम् । तिक्तसंयुतशब्देन कर्म संबध्यते ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चतुर्थोऽध्यायः ॥

# पञ्चमोऽध्यायः ।

क्षतक्षयकासयोर्यत्नेन प्राधान्यात् पृथगेवाध्यायारम्भः ॥

अथातः क्षतक्षयकासचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

उरस्यन्तःक्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत्
क्षीरेणशालीन्जीर्णेऽद्यात्क्षीरेणैवसशर्करान्॥
पार्श्ववस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुताम्
भिन्नविट्तु समुस्तातिविषापाठां सवत्सकाम्

अन्तःक्षतशब्देन निदानोक्तं स्मारयति । तस्मिन् लाक्षाक्षौद्रक्षीरे जीर्णे सशर्कराञ्छालीन् क्षीरेण वाद्यात् । तामिति लाक्षाम् । समुस्तादिकां लाक्षामेव सवत्सकाम् ।

लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम्
त्वक्क्षीरींसमितंक्षीरेपक्त्वादीप्तानलःपिबेत् ॥

लाक्षादीनि समानि जीवनीयगणस्य संयुक्तस्यान्यतमसमत्वम् । मधूच्छिष्टं सिक्थकम् । समित् गोधूमचूर्णं स्यात् । तत् सर्वं बहुना क्षीरेण पानयोग्यं पक्त्वा दीप्ताग्निः उरक्षती पिबेत ॥

इक्ष्वालिकाबिसग्रन्थिपद्मकेसरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥

क्षतेऽन्तरुरसि पुरुषः सन्धानार्थमिक्ष्वालिकादिभिः शृतं क्षीरं मधुयुक्तं पिबेत् ॥

यवानां चूर्णमामानां क्षीरसिद्धं घृतान्वितम् ॥
ज्वरदाहे सिताक्षौद्रसक्तून् वा पयसा पिबेत् ।

यवचूर्णं क्षीरेण तथा साध्यते यथा पेयाप्रायो भवति । आमानामित्यनग्निस्पृष्टानां यवानाम् । तच्चूर्णं सज्वरदाहे क्षते । अथवा सितादीन् पयसा पिबेत् ॥

कासवांस्तु पिबेत्सर्पिर्मधुरौषधसाधितम् ।
गुडोदकं वा क्वथितं सक्षौद्रमरिचं हिमम् ।
चूर्णमामलकानां वा क्षीरे पक्वं घृतान्वितम् ॥
रसायनविधानेन पिप्पलीर्वा प्रयोजयेत् ।

कासवानिति प्रकरणात् क्षतकासवान् । मधुरौषधानि रसभेदीयोक्तो मधुरस्कन्धः । सुबोधम् । आमलकचूर्णस्यैव प्रयोगः । पिप्पलीनां रसायनविधिस्तत्रैव वक्ष्यते ॥

कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकाः
मधूकमधुकद्राक्षा त्वक्क्षीरीपिप्पलीबलाः ॥
त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सिता ।
द्राक्षा मधूकं खर्जूरं पलांशं श्लक्ष्णचूर्णितम् ॥
मधुना गुलिका घ्नन्ति ता वृष्याः पित्तशोणितम्
कासश्वासारुचिच्छर्दिमूर्छाहिध्मामदभ्रमान् ॥
क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान ।
रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ।

पर्वास्थिशूलसंयुक्तः कासी मधूकादिकं सघृतमाक्षिकं लिह्यात् । त्रिजातकाद्या

गुळिका सुबोधिनी । इयच्चैलाद्येति प्रसिद्धा । आढ्यमारुतो वातव्याधावुक्तः ॥

रक्तेऽतिवृद्धे च्छागं वा जाङ्गलं वा पिबेदसृक्
वर्षाभूशर्करारक्तशालितण्डुलजं रजः ॥
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ।
मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ॥

रक्तेऽतिवृद्धे बहिः प्रवर्तमाने । जाङ्गलजीवप्रभावत्वाज्जाङ्गलम् । वर्षाभ्वादीनां चूर्णं द्राक्षारसादिभिः सिद्धं रक्तष्ठीवी पिबेत् । सिद्धमग्निसंयोगेन । सुबोधम् ॥

यथास्वं मार्गविसृते रक्ते कुर्याच्च भेषजम् ।

अस्मिन्नुरःक्षते कदाचिदतिप्रवृद्धं रक्तमधो नासिकया वापि प्रवर्तते । तत्र रक्ते यथास्वं रक्तपित्तवदपि भेषजं कुर्यात् ॥

पिप्पलीमधुकं पिष्टं कार्षिकं ससितोपलम् ॥
प्रास्थिकं गव्यमाजं च क्षीरमिक्षुरसं तथा ।
यवगोधूममृद्वीकाचूर्णमामलकाद्रसः ॥
तैलं च प्रसृतांशानि तत् सर्वं मृदुनाग्निना ।
पचेल्लेहो घृतक्षौद्रयुतः स क्षतकासनुत् ॥
श्वासहृद्रोगकासघ्नो हितो वृद्धाल्परेतसाम् ।

पिप्पल्यादिर्सितोपलान्तं कार्षिकं । यवादिचूर्णं प्रत्येकं प्रसृतांशं द्विपलमित्यर्थः । आमलकफलरसस्य प्रसृतो द्वे पले यद्यपि शुष्कमेयेष्विदं मानं द्विगुणं तत् द्रवार्द्रयोरित्युक्तं सामान्येनैव । तथाचाचार्येणैव युक्त्या सम्पन्ने हृदये कथितम् । कुडुबादि तथा द्रवमिति । अत्र तेन प्रसृतो न संगृहीतः । तैलेऽप्येवमेव विज्ञेयम् । घृतं क्षौद्रं च संस्कारापादनयोग्यं दोषाद्यपेक्षमात्रं वा ॥

मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ।
क्षामःक्षीणःक्षतोरस्कोमन्दनिद्रोऽग्निदीप्तिमान्॥
शृतक्षीरसरेणाद्यात् सघृतक्षौद्रशर्करम् ।

यस्य तु क्षतकासिनो मूढो नानुलोममार्गप्रवृत्तः प्रबलो वातः सोऽजस्य मेदोऽद्यात् । किंभूतं सुराभृष्टं ससैन्धवं च । सुरा भृष्टा येनेति वक्तव्ये बहुत्वान्मेदसः प्राधान्यज्ञापनार्थं विपरीतप्रयोगः यस्तु क्षामत्वादियुक्तः स तदेवाजामेदः शृतक्षीरजातेन सरेण सहघृतक्षौद्रशर्करमद्यात् ॥

शर्करायवगोधूमं जीवकर्षभकौ मधु ॥
शृतक्षीरानुपानं वा लिह्यात् क्षीणः क्षती कृशः
क्रव्यात्पिशितनिर्यूहं घृतभृष्टं पिबेच्च सः ॥
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ।

यः पुनः क्षीणत्वादियुक्तः कासी सः शर्करादिकं शृतक्षीरानुपानमद्यात् । स च क्षीणत्वादियुक्तः क्रव्यादां पिशिताशिनां मांसस्य निर्यूहं रसं घृतभृष्टं पिप्पलीक्षौद्राभ्यां युक्तं मांसशोणितवर्धनार्थं पिबेत् ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षसालप्रियङ्गुभिः ।

तालमस्तकजम्बूत्वक्प्रियालैश्च सपद्मकैः ॥
साश्वकर्णैः शृतात् क्षीरादध्याज्जातेन सर्पिषा।
शाल्योदनं क्षतोरस्कः क्षीणशुक्रबलेन्द्रियः ॥

न्यग्रोधादिभिः शृतात् क्षीराज्जातेन सर्पिषा सह शालीनामोदनं क्षतोरस्कत्वादियुक्तोऽश्नात् । तालमस्तकं तालप्रान्तम् । शेषाणि सर्वाणि प्रसिद्धानि ॥

वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्मतः ।
तैलैश्चानिलरोगघ्नैः ---

वातपित्ताभ्यामर्दिते पुरुषे यो गात्रभेदस्तस्मिन् घृतैस्तैलैश्च वातव्याधिहरद्रव्यसिद्धैरभ्यङ्गो मतः ॥

—पीडिते मातरिश्वना ॥
हृत्पार्श्वार्तिषु पानं स्यात् जीवनीयस्य सर्पिषः
कुर्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥

मातरिश्वना वातेन पीडिते पुरुषे या हृदायार्तयस्तासु जीवनीयद्रव्यसिद्धस्य सर्पिषः पानं स्यात् । अथवा यत् पित्तरक्ताविरोधि वातव्याधिहरं कर्म तत् कुर्यात् ॥

यष्ट्याह्वनागबलयोः काथे क्षीरसमं घृतम् ।
पयस्यापिप्पलीवांशीकल्कसिद्धं क्षते हितम् ॥

घृतान्मधुयष्टीनागबलयोः क्वाथश्चतुर्गुणः । पयस्यादीनां कल्कः स्नेहाच्चतुर्थांशः । पयस्याक्षीरिणी । वांशी तुकाक्षीरी । एतद् घृतं क्षतकासे हितम् ॥

शृतं वाष्टगुणे क्षीरे कोललाक्षारसान्वितम् ।
कल्कैः कट्वङ्गदार्वीत्वग्वत्सकत्वक्फलैर्घृतम् ॥

क्षीरं घृतादष्टगुणम् । बदराणां लाक्षायाश्च रसो निर्यूहः पृथक् घृतसमः । कट्वङ्गादीनां चतुर्णां कल्कं स्नेहाच्चतुर्थांशेन । एतदपि घृतमुरःक्षते कासे च हितम् ॥

जीवनीयो गणः शुण्ठी वरी वीरापुनर्नवौ ।
बलाभार्ङ्गीस्वगुप्तर्षिशटीतामलकीकणाः ॥
शृङ्गाटकं पयस्या च पञ्चमूलं च यल्लघु ।
द्राक्षाक्षोडादि च फलं मधुरस्निग्धबृंहणम् ॥
तैः पचेत् सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्णकल्कितैः
क्षीरधात्रीविदारीक्षुच्छागमांसरसान्वितम् ॥
प्रस्थार्धं मधुनः शीते शर्कराधंतुलारजः ।
पलार्धिकं च मरिचत्वगेलापत्रकेसरम् ॥
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां यथानलम्
अमृतप्राशमित्येतन्नराणाममृतं घृतम् ॥
सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ।
नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान् ॥
स्त्रीप्रसक्तान कृशान् वर्णस्वरहीनांश्च बृंहयेत्
कासहिध्माज्वरश्वासदाहतृष्णास्रपित्तनुत् ॥
पुत्रदं छर्दिमूर्छाहृद्योनिमूत्रामयापहम् ।

एवं जीवनीयादिभिः कर्षांशैः घृतप्रस्थं पचेत् । जीवनीयगणादिपञ्चमूलान्तस्य द्रव्याणि पृथक्कर्षांशानि । द्राक्षादीनां लाभतः कर्षांशानां प्रयोगः । क्षीरधात्रीरसादीनां पृथक् पृथग्घृतसमत्वं विज्ञेयम् । तस्मिन्

घृते शीते मधुनः प्रस्थार्धं षोडशपलानि। शर्कराचूर्णस्य च पञ्चाशत् पलानि । मरिचादिकं द्विकार्षिकं चूर्णितं विनीय प्रक्षिप्य यथानलमित्यग्निबलापेक्षिणी प्रयोगे मात्रा । एतच्च घृतं नाम्ना अमृतप्राशमिति । सुधामृतरसमिति चेष्यते । एतद्धि नराणाममृतम् । एतच्च नरेण प्राश्यं यः क्षीरेण मांसरसेन वान्नं समश्नाति । एतद्धि नष्टशुक्रादीनां बृंहणं कासघ्नत्वादिगुणयुक्तं च ॥

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाष्मर्यकर्तृणम् ॥
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिराम् ।
पालिकानि पचेत्तेषां रसे क्षीरचतुर्गुणे ॥
कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ।
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः ॥
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ।
मूत्रकृच्छ्रप्रमेहार्शः कासशोषक्षयापहः ॥
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ।

श्वदंष्ट्रादीनां क्वाथस्य चतुश्चत्वारिंशत् पलानि । क्षीरं क्वाथाच्चतुर्गुणम् । स्वगुप्तादीनां कल्कः स्नेहाच्चतुर्थांशः । श्वदंष्ट्रा गोक्षुरकः । कर्तृणं भूतिकम् । पृथक्पर्णी पृश्निपर्णी । स्थिरा सालपर्णी ॥

मधुकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद् घृतम् ॥
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ।
पृथगष्टपलं क्षौद्रशर्कराभ्यां च मिश्रयेत् ॥
समसक्तु क्षतक्षीणरक्तगुल्मेषु तद्धितम् ।

मधुयष्ट्या अष्टौ पलानि । शुष्कायाः द्राक्षायाः प्रस्थः षोडशपलानि । क्वाथकल्पनया क्वाथयेत् । तस्मिन् क्वाथे षण्णवतिपलमानं घृतात् प्रस्थं पचेत् । तस्मिन् घृतप्रस्थे शीते च क्षौद्रस्याष्टपलैः शर्करायाश्चाष्टपलं विमिश्रयेत् । अस्य च घृतस्य सक्तुभिः समैरुपयोगः ॥

धात्रीफलविदारीक्षुजीवनीयरसात् घृतात् ॥
गव्याजयोश्च पयसोः प्रस्थं प्रस्थं विपाचयेत्
सिद्धशीते सिताक्षौद्रद्विप्रस्थं विनयेत्ततः ॥
यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ।
वयस्थापनमायुष्यं मांसशुक्रबलप्रदम् ॥

धात्रीफलरसादीनां सप्तानां पृथक्प्रस्थमानत्वम् । तस्मिन् प्रस्थसप्तके सिद्धेन घृतपाकेन पूतेन वस्त्रस्रुतेन शर्करायाः प्रस्थं षोडशपलानि । क्षौद्रस्य च प्रस्थं द्वात्रिंशत् पलानि । विनयेत् प्रक्षिपेद्यक्ष्मादिहरमेतत् घृतमिति विज्ञेयम् । वयस्थापनत्वादियुक्तं च । वयस्थापनं जरानाशनात् ॥

घृतं तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत्
लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम्॥
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ।

पित्तेऽधिके सर्वं घृतमेव लिह्यात् । यतस्तल्लीढं स्थैर्याच्छैत्याच्च पित्तं निर्वापयेत् शमयेदल्पत्वाच्चाग्नेर्नाशं न करोति । वाते त्वधिके घृतं विलीनं पिबेत् । यतः पीतं

व्याप्नेरनिलमाक्रामति । तत्संयोगेन प्रसरन्त-मूष्माणं निरुणद्धि ॥

क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु ।
त्वक्षीरीपिप्पलीलाजचूर्णैः स्त्यानानि योजयेत्

एतान्येव चानन्तरोक्तानि घृतानि क्षामाद्यङ्गानां त्वक्षीर्यादिचूर्णैः सह स्त्यानान्यविलीनानि योजयेत् ॥

सर्पिर्गुडान् समध्वंशान् कृत्वा दद्यात् पयोनु च
रेतोवीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥

चूर्णसंयुक्तैस्त्यानैश्च घृतैर्माक्षिकभागमिश्रैः सर्पिर्गुडान् घृतपिण्डकान् कृत्वा तानेव योजयेत् । अनु च पयो दद्यात् पानाय तैः सर्पिर्गुडैः पुरुषो रेतोवीर्यादिकमाशुतरमाप्नुयात् ॥

बलाविदारीह्रस्वं च पञ्चमूलं पुनर्नवम् ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गामुष्ट्यंशकास्तथा॥
एषां कषाये द्विक्षीरे विदार्या जरसांशके ।
जीवनीयैः पचेत् पिष्टैरक्षमात्रैर्घृताढकम् ॥
सितापलानि पूते च शीते द्वात्रिंशदावपेत् ।
गोधूमपिप्पलीवांशी चूर्णं शृङ्गाटकस्य च ॥
समाक्षिकं कौडुबिकं तत्सर्वं खजमूर्च्छितम् ।
स्त्यानं सर्पिर्गुळान् कृत्वा भूर्जपत्रेण वेष्टयेत्॥
तान्जग्ध्वापालिकान् क्षीरं मद्यंत्वनुपिबेत् कफे
शोषे कासे क्षते क्षीणे श्रमस्त्रीभारकर्शिते ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥

बलाविदार्यादीनि पृथक् ह्रस्वपञ्चमूलं पुनर्नवञ्च पञ्चानां क्षीरिवृक्षाणां शुङ्गानीत्येतत् पालिकम् । पानीयपलशतद्वयं साष्टपलम् । कथितशिष्टो द्विपञ्चाशत् पलानि । ततः कषायाद्द्विगुणं क्षीरम् । केवलाया विदार्याः काथ आजमांसरसश्च बलादिकाथसमौ । जीवनीयानि कार्षिकाणि । गोधूमचूर्णादिकं कुडुबमानम् । कुडुबश्चत्वारि पलानि । माक्षिकस्य कुडुबोऽष्टौ पलानि । खजो मन्थनोपकरणम् । तान् सर्पिर्गुडान् प्रतिदिनं पालिकाञ्जग्ध्वा सर्वः कश्चित् क्षीरमनुपिबेत् । कफेऽधिके मद्यं नानाविधं कफहरमनुपिबेत् । तापपीनसयोरुरोमूलयोरुरःस्थितत्वम् । पीनसो नासास्रावः ॥

सशर्कराभृते क्षीरघृततैलाढकत्रये ।
चूर्णीकृताः क्षिपेत् पक्वसान्द्रे दशपलाः पृथक्
द्राक्षात्मगुप्तावर्षाभूसमंगाभीरुपिप्पलीः ।
तद्वद्विदार्यामलके प्रस्थार्धं विश्वभेषजम् ॥
यष्ट्याह्वसौवर्चलयोर्द्विपलं मरिचस्य च ।
क्षामःक्षीणःक्षतःशुष्यंस्तान्खादेत्पालिकैर्गुळैः
तथा सद्यो रसादीनां वृध्या पुष्टिं समश्नुते ।

क्षीरघृततैलानामाढकत्रयमेकीकृत्य स्तोकया शर्करया संयोज्य पचेदासान्द्रीभावात् । तस्मिंश्च शर्करापाकेन पक्वे सान्द्रे द्राक्षाद्यामलकान्तानि पृथग्दशपलानि क्षिपेत् ।

शुण्ठ्या अष्टौ पलानि । यष्ट्याह्वसौवर्चलयोर्द्विपलमेकस्य पलम । मरिचस्य तु द्विपलम् । रसादीनां धातूनां वृध्या संबन्धः ॥

गोक्षीरार्धाढकं सर्पिः प्रस्थमिक्षुरसाढकम् ॥
रसाद्विदार्याः कुडवं रसात् प्रस्थं च तैत्तिरात्
दद्यात् सिध्यति तास्मिंस्तु पिष्टानिक्षुरसैरिमान्
मधूकपुष्पं कुडवं कुडवं च प्रियाळतः ।
पलद्वयं तवाक्षीर्याः खर्जूराणि च विंशतिः ॥
पृथग्विभीतकान्मज्ञः पिप्पल्याश्च चतुर्थिकाम् ।
त्रिंशत्पलानिखण्डाच्चमधुकात्पाणिमानिकाम्
तथार्धपलिकान्यत्र जीवनीयानि दापयेत् ॥
सिद्धे द्विकुडवं क्षौद्राच्छीते दत्वा च मोदकान्
कारयेन्मरिचाजाजीपलचूर्णावचूर्णितान् ॥
वातासृक्पित्तरोगेषु क्षतकासक्षयेषु च ।
क्षीणौजःस्वरशुक्रेषु योनिदोषेषु संस्रवे ॥
मृतप्रजासु वन्ध्यासु हितं गर्भस्य च स्रुतौ ।

गोक्षीरार्धाढकमित्यादि सुबोधम । कुडबादौ शुष्कमेयेष्विदं मानं द्विगुणं तद्द्रवार्द्रयोरिति सर्वत्र स्मर्तव्यम् । मधूकपुष्पादीनामिक्षुरसः पेषणे यावानुपयुज्यते । खर्जूराणि फलसंख्यया । चतुर्थिका पलम् । पाणिमानिका अष्टौ पलानि । मरिचाजाज्योर्मिश्रयोः पलम् ॥

वीतत्वगस्थिकूश्माण्डतुलां स्विन्नां पुनः पचेत्
घट्टयन् सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत्
खण्डाच्छतं कणाशुण्ठ्योर्द्विपलं जीरकादपि ।
त्रिजातधान्यमरिचं पृथगर्धपलांशकम् ॥
अवतारितशीते च दत्वा क्षौद्रं घृतार्धिकम् ।
खजेनामथ्य च स्थाप्यं तन्निहन्त्युपयोजितम्
कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान् ।
उरःसन्धानजननं मेधास्मृतिबलप्रदम् ॥
अश्विभ्यान्निर्मितं हृद्यं कूश्माण्डकरसायनम् ।

पृथक्ग्रहणात्त्रिजातकस्य प्रतिद्रव्यं द्विकार्षिकत्वं घृतार्धिकत्वान्मधुनः षोडेश पलानि ॥

पिबेन्नागबलामूलस्यार्धकर्षाभिवर्धितम् ।
पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ॥
एष प्रयोगः पुष्ट्यायुर्बलवर्णकरः परम् ।
मण्डूकपर्ण्याः कल्पोऽयं यष्ट्या विश्वौषधस्य च

अर्धकर्षाभिवर्धितमिति । प्रथमेऽह्न्यर्धकर्षः । द्वितीये कर्षः । तृतीये सार्धकर्षः । चतुर्थे द्वौ कर्षौ । पञ्चमेऽर्धोनत्रितयः । षष्ठे त्रयः । सप्तमेऽर्धोनचत्वारः । अष्टमे तु पलम् । शेषाणि द्वाविंशतिदिनानि पलम् । नागबलामूलवन्मण्डूकपर्ण्या अपि वृद्धिः । क्षीरमानं वृद्धिविषयकल्पम । तद्वन्मधुयष्ट्याः । तद्वच्छृङ्गिवेरस्य । मण्डूकपर्णी ब्रह्मसुवर्चला ॥

पादशेषं जलद्रोणे पचेन्नागबलातुलाम् ।
तेन क्काथेन तुल्यांशं घृतं क्षीरं च साधयेत् ॥
पलार्धिकैश्चातिबलाबलायष्टीपुनर्नवैः ।
प्रपौण्डरीककाश्मर्यप्रियाळकपिकच्छुभिः ॥

अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः ।
काकोळीक्षीरकाकोळीक्षीरशुक्काद्विजीरकैः ॥
मृणाळबिसखर्जूरशृङ्गाटककशेरुकैः ।
एतन्नागबलासर्पि· पित्तरक्तं क्षतक्षयम् ॥
जयेत्तृड्भ्रमदाहांश्च बलपुष्टिकरं परम् ।
वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम ॥
उपयुज्य तु षण्मासाद् वृद्धोऽपि तरुणायते ।

पादशेषमित्यादिना नागबलासर्पिः । सुबोधम । क्षीरशुक्का क्षीरविदारीत्युच्यते ॥
अन्याक्षीरविदारीस्यादिक्षुगन्धेक्षुवल्यपि ।
क्षीरवल्ली क्षीरकन्दा क्षीरशुक्ला पलाशिनी ॥
इति पठन्ति ॥

शर्करा पिप्पलीचूर्णैः सर्पिषा माक्षिकेण च ॥
संयुतं वा शृतं क्षीरं पिबेत् कासज्वरापहम् ।
फलाम्लं सर्पिषा भृष्टं विदारीक्षुरसे कृतम् ॥
स्त्रीषु क्षीणः पिबेद्यूषं जीवनं बृंहणं परम् ।
सक्तूनां वस्त्रपूतानां मन्थं क्षौद्रघृतान्वितम् ॥
यवान्नसात्म्यो दीप्ताग्निः क्षतक्षीणः पिबेन्नरः

शर्करादिभिः संयुक्तं शृतं क्षीरं पञ्चसारमित्याहुः । फलाम्लादि यूषविशेषणम । यूषो मुद्गादीनामन्यतमं विना न भवति । फलैर्दाडिमतिन्त्रिणीकादिभिरम्लम् । क्षतस्य क्षीणस्य यवान्नसात्म्यस्य दीप्ताग्नेश्च सतो मन्थप्रयोगः ॥

जीवनीयोपसिद्धं वा जांगलं घृतभर्जितम् ॥
रसं प्रयोजयेत् क्षीणे व्यञ्जनार्थं सशर्करम् ।
गोमहिष्यश्वनागाजैः क्षीरैर्मांसरसैस्तथा ॥
यवान्नं भोजयेद्यूषैः फलाम्लैर्वा घृताप्लुतैः ।

जीवनीयोपसिद्धमित्यादिना मांसरसानां नानाविधानां क्षीराणां यूषाणां चोपयोगविधानं सुबोधम् ॥

दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचनः ॥
यक्ष्मोक्तः क्षतिनां शस्तो ग्राही शकृति तु द्रवे

एष विधिरनन्तरोक्तो बृंहणः क्षतक्षीणयोर्दीप्तेऽग्नौ सति विधेयः । मन्दे त्वग्नौ दीपनपाचनो विधिर्भवति । यश्च विधी राजयक्ष्मण्युक्तः सोऽपि क्षतिनां शस्तः । यदा तु क्षतस्य विनाजीर्णादिकं शकृद्द्रवं भवति तदा ग्राही विधिः शस्तः ॥

दशमूलं स्वयंगुप्तां शंखपुष्पीं शटीं बलाम् ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥
भार्ङ्गीं पुष्करमूलं च द्विपलांशान्यवाढकम् ।
हरीतकीशतं चैकं जलपञ्चाढके पचेत् ॥
यवस्वेदे कषायं तं पूतं तच्चाभयाशतम ।
पचेद्गुळतुलां दत्वा कुडवं च पृथग्घृतात् ॥
तैलात्सपिप्पलीचूर्णात्सिद्धशीते चमाक्षिकात्
लेहाद्द्वे चाभये नित्यमतः खादेद्रसायनात् ॥
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्धनम ।
पञ्चकासान् क्षयं श्वासं सहिध्मं विषमज्वरम्
मेहगुल्मग्रहण्यर्शोहृद्रोगारुचिपीनसान् ।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥

दशमूलेत्यादिना अगस्त्यलेहः सुबोधम् । अत्र जलस्याढकमष्टाविंशत्यधिकं पलशतम् । घृततैलमाक्षिकाणां कुडुबान्यष्टपलानि । पिप्पलीचूर्णस्य कुडुबं चतुष्पलम् । हरीतकीफलानां क्वाथशल्कादुद्धृतानां विगतास्थीनां यथोक्तस्नेहभृष्टानां तेनैव सह गुडक्वाथप्रक्षेपः । वृद्धानां प्रायो लेहेषु च्यवनप्राशवद्व्यवहारः । रसायनं लेह एव । तदिति रसायनपरामर्शः ॥

दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयम् ।
पाठाश्वगन्धापामार्गस्वगुप्तातिविषामृताः ॥
बालबिल्वं त्रिवृद्दन्तीमूलं पत्रं च चित्रकात् ।
पयस्यां कुटजं हिंस्रां पुष्पं सारं च बीजकात्
बोळस्थविरभल्लातविकङ्कतशतावरीः ।
पूतीकरञ्जशम्याकचन्द्रलेखासहाचरम् ॥
सौभञ्जनकनिम्बत्वगिक्षुरं च पलांशकम् ।
पथ्यासहस्रं सशतं यवानां चाढकद्वयम् ॥
पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत् ।
पूते क्षिपेत् सपथ्ये च तत्र जीर्णगुळात्तुलाम्॥
तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः ।
अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य च ॥
शीते प्रस्थद्वयं क्षौद्रात् पिप्पलीकुडुबं क्षिपेत् ।
चूर्णीकृतात्त्रिजाताच्च त्रिपलं निखनेत्ततः ॥
धान्ये पुराणकुम्भस्थं मासं खादेच्च पूर्ववत् ।
रसायनं वसिष्ठोक्तमेतत् पूर्वगुणाधिकम् ॥
स्वस्थानां निष्परीहारं सर्वर्तुषु च शस्यते ।

दशमूलबलादिकं वसिष्ठमुनिप्रोक्तं रसायनं सुबोधम् । दशमूलं पृथग्द्रव्यं पलांशिकम । दन्त्या मूलम् । चित्रकस्य पत्रम् । पयस्या क्षीरिका । कुटजं वत्सकम् । हिंस्रा मांसी । बीजकमसनम् । बोळस्थविरं बोळवृक्षः । कुलहलमलम्बुसो भूकदंबकः । शकदेशे मुण्डिकेति प्रसिद्धा । चन्द्रलेखा बाकुची । द्विचत्वारिंशदौषधपलानि । यवानामष्टाविंशत्यधिकं पलशतम् । हरीतकीफलानां चैकादशशतानि । सर्वमेकीकृत्य तत्तुलया परिच्छिद्य ततोऽष्टगुणेन तोयेन पचेत् । पूतं शल्करहितं स्रुतत्वात् । पथ्याः शल्कादुद्धृत्यानस्थिभर्जिताः पूर्ववत् क्वाथे प्रक्षेप्याः । ततः पक्कं धान्यराशौ निखनेत् । मासं धान्ये स्थितिः । पूर्ववत् गुणा आगस्त्योक्ताः ॥

पालिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले
कुडुबांशानि वृक्षाम्लं डाडिमं पत्रमार्जकात् ॥
एकैकामरिचाजाज्योर्धान्यकाद्द्वे चतुर्थिके ।
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् ॥
कृत्वा चूर्णमतो मात्रामन्नपानेषु दापयेत् ।
रुच्यं तद्दीपनं बल्यं पार्श्वार्तिश्वासकासनुत् ।

आर्जकस्य कुठेरस्य पत्रम् । एकैकेति चतुर्थिकायाः पलपर्यायस्य परामर्शः । धान्यकफलात् द्वे पले । अतः चूर्णान्मात्रां स्तोकं प्रत्यहमन्नपानेषु दापयेत् । तच्चूर्णं रुच्यादिगुणम् ॥

एकांषोडशिकांधान्याद्द्वेद्वेचाजाजिदीप्यकात्

ताभ्यां डाडिमवृक्षाम्ले द्विर्द्विस्सौवर्चलात् पले
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्चपलानि च
तच्चूर्णं षोडशपलैः शर्कराया विमिश्रयेत् ॥
षाडवोऽयं प्रदेयः स्यादन्नपानेषु पूर्ववत्
विधिश्च यक्ष्मपित्तास्रविहितः शस्यते क्षते ॥

एकामित्यादौ षोडशिका कर्षः । अजाज्या द्वौ कर्षौ । अजमोदस्य द्वौ कर्षौ । ताभ्यामित्य-जाजीदीप्यकाभ्यां डाडिमवृक्षाम्ले द्विः द्विः । तेन मिश्रिताभ्यामजाजीदीप्यकाभ्यां द्विगुणं डाडिमं तद्वत्तिन्त्रिणीकम् । एवमष्टौ कर्षा डाडिमस्याष्टौ तिन्त्रिणकिस्य । पलं सौवर्चलस्य । शुण्ठ्याः कर्षः । पञ्च पलानि दधित्थमज्ञः । दधित्थं कपित्थम् । शर्करायाः षोडशपलानि । राजयक्ष्मचिकित्सितं रक्तपित्तचिकित्सितं च विकल्प्योरःक्षते योज्यम् ॥

निवृत्ते क्षतदोषे तु कफे वृद्ध उरः शिरः ।
दाल्येतेकासिनोयस्यसनाधूमानिमानपिबेत् ॥

एवमनन्तरोक्तेन बृंहणेन क्रमेण क्षतदोषे निवृत्ते बृंहणेनैव कफे वृद्ध उरसि शिरसि च कफानुबन्धेन यस्य कासिनो महती रुग्भवति स ना पुरुष इमान् वक्ष्यमाणान् धूमान् पिबेत् ॥

द्विमेदाद्विबलायष्टीकल्कैः क्षौमे सुभाविते ।
वर्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुपः ॥
मनःशिलाबलासाजगन्धात्वक्क्षीरिनागरैः ।
तद्वदेवानुपानं तु शर्करेक्षुगुळोदकम् ।

पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ॥
ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनः ।

द्विमेदादिकल्कक्षौमकृतया वर्त्या धूमः । तत्रानुपानं जीवनीयपक्वं घृतम् । मनःशिलादिभिः क्षौमवर्तीधूपेऽनुपानं शर्करासंस्कृतं जलं इक्षुणा क्षुण्णेन । पिष्ट्वेत्यादि सुबोधम् । एतद्धूमपस्य तित्तिरिरसादिना भोजनम् ॥

क्षयजे बृंहणं पूर्वं कुर्यादग्नेश्च वर्धनम् ।
बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनम् ॥
शम्याकेन त्रिवृतया मृद्वीकारसयुक्तया ।
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम्

क्षयज इत्यादिना क्षयकासनिश्चयः । सुबोधम् । शम्याकेनेत्यादिना शोधनानि घृतानि । कदाचिच्छम्याकेन कदाचिद्राक्षारसयुक्तया त्रिवृतया । कदाचित्तिल्वकस्य कषायेण । कदाचिद्विदारीस्वरसेन । शम्याक आरग्वधः । तिल्वकं लोध्रम् ॥

पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान् ॥
घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ।
विदारीभिः कदम्बैर्वा तालसस्यैश्च साधितम्
घृतं पयश्च—

अथवा पित्तादिषु क्षीणेषु समैः कर्कटक्यादिभिः स्नेहपाकपरिभाषया घृतं साधितं पिबेत् । विदारीकन्दैर्वा घृतम् । क-

दन्त्यैर्वा घृतम् । तालबीजैः सिद्धं घृतं वा क्षीरं वा ॥

—मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ।
शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे ॥
घृतमण्डेन लघुनानुवास्यो मिश्रकेण वा ।

क्षयकासे यत्र पुनर्मूत्रवैवर्ण्यादिकं भवति तत्र लघुना घृतमण्डेनानुवास्यः । पायौ सश्रोणिवंक्षणे शूने सवेदन इत्यनुवर्तते । मिश्रकं घृततैले ॥

जाङ्गलैः प्रतिभुक्तस्य वर्तकाद्या विलेशयाः ॥
क्रमशः प्रसहास्तद्वत् प्रयोज्याः पिशिताशिनः
औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ॥
कफं शुद्धैश्च तैः पुष्टिं कुर्यात् सम्यग्वहत्रसः ।

अनुवासनानन्तरं प्रथमं जाङ्गलानां प्रयोगः । ततः क्रमेण वर्तकादीनां विलेशयानां प्रसहानां च पिशिताशिनाम् । ते हि वर्तकादयः कफमौष्ण्यात् प्रमाथित्वाच्च स्रोतोभ्यश्च्यावयन्ति तैश्च स्रोतोभिः शुद्धैः सम्यग्वहत्रसः पुष्टिं कुर्यात् ॥

चविकात्रिफलाभार्ङ्गीदशमूलैः सचित्रकैः ॥
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ।
शृतैर्नागरदुस्पर्शापिप्पलीशटिपौष्करैः ॥
पिष्टैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ।
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्च लवणानि च
दत्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः

चविकादीनां क्वाथः स्नेहाच्चतुर्गुणः । नागरादीनां च स्नेहाच्चतुर्थांशः । सिद्धे घृते क्षारयोर्लवणानां च दोषाद्यपेक्षं युक्त्या मात्रा ॥

कासमर्दाभयामुस्तापाठाकट्फलनागरैः ।
पिप्पल्या कटुरोहिण्या काश्मर्यासुरसेन च ॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके ।
पचेच्छोषज्वरप्लीहसर्वकासहरं शिवम् ॥

कासमर्दादीनां सुरसान्तानां कार्षिकत्वम् । क्षीरदाक्षारसयोर्मिश्रितयोराढकः । शिवं मङ्गल्यम ॥

वृषव्याघ्रीगुडूचीनां पत्रमूलफलाङ्कुरात् ।
रसकल्कैर्घृतं पक्वं हन्ति कासज्वरारुचीः ॥

वृषादीनां प्रत्येकं पत्रादीनां क्वाथे कल्के च । तयोश्च स्नेहपाकपरिभाषा ॥

द्विगुणे डाडिमरसे सिद्धं वा व्योषसंयुतम् ।
पिबेदुपरिभक्तस्य यवक्षारयुतं नरः ॥

डाडिमस्वरसो घृताद्द्विगुणस्तत्र व्योषं कल्के, यवक्षारेण संयुक्तं घृतं तथोक्तं भक्तस्योपरि भोजनान्ते ॥

पिप्पलीगुडसिद्धं वा छागक्षीरयुतं घृतम् ।
एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम् ॥
स्युर्दोषबद्धकण्ठोरःस्रोतसां च विशुद्धये ।

पिप्पलीगुडाभ्यां सिद्धं सच्छागक्षीरेण पीयते । एतानीति चविकाद्यादीनि प्रत्यवमृश्यन्ते । सुबोधम् ॥

श्वाविडां सूचयो दग्धाः सघृतक्षौद्रशर्कराः ।
श्वासकासहरा बर्हिपादौ वा क्षौद्रसर्पिषा ॥
एरण्डपत्रक्षारं वा व्योषतैलगुडान्वितम् ।
लेहयेत् क्षारमेवं वा सुरसैरण्डपत्रजम् ॥
लिह्यात्त्र्यूषणचूर्णं वा पुराणगुळसर्पिषा ।
चित्रकत्रिफलाजाजीकर्कटाख्याकटुत्रिकम् ॥
द्राक्षां च क्षौद्रसर्पिर्भ्यां लिह्यादद्याद्गुडेन वा।

श्वाविडां प्राणिनां सूचयो देहे जायन्ते बर्हिपादौ वा दग्धाविति संबन्धः । सुबोधम । चित्रकादिचूर्णं क्षौद्रसर्पिर्भ्यां लिह्यात् गुडेन वा सहाद्यात ॥

पाठामधुकजीवन्तीत्वक्क्षीरीत्रिफलाघनम् ।
शटीद्विबृहतीद्राक्षापिप्पल्येलावितुन्नकम् ॥
शारिवापुष्करजटाकर्कटाख्यारसाञ्जनम् ।
पुनर्नवालोहरजस्त्रायमाणायवानिका ॥
ऋद्धिस्तामलकी भार्ङ्गी विल्ङ्गं धन्वयासकम् ।
क्षारचित्रकचव्याम्लवेतसव्योषदारु च ॥
सर्वकासान् जयेल्लीढं तच्चूर्णं मधुसर्पिषा ।

पाठामधुकादिश्लोकत्रयेण चूर्णो मधुसर्पिषा लीढः सर्वकासान् जयेत् । त्वक्क्षीरी तुकाक्षीरी । घनं मुस्तम । वितुन्नकं कुटन्नटम् । (नि) कुटन्नटं प्लवन्धान्यं वितुन्नं परिपेलवम् ।। पुष्करजटा पुष्करमूलम । तामलकी ताली । सैव भूधात्री । व्योषं त्रिकटुकम् ॥

पद्मकं त्रिफला व्योषं विळङ्गं देवदारु च ।
बलारास्ना च तच्चूर्णं समस्तसमशर्करम् ॥
खादेन्मधुघृताभ्यां वा लिह्यात् कासहरं परम
तद्वन्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ॥
पथ्याशुण्ठीघनगुळैर्गुळिकां धारयेन्मुखे ।
सर्वेषु कासश्वासेषु केवलं वा विभीतकम् ॥
कल्के तिल्वकपत्राणां घृतभृष्टे सशर्करे ।
पेयोत्कारिकाथवा च्छर्दितृट्कासामातिसारजित्

पद्मकादीनां चूर्णान्येकतः शर्करा चैकतः । अथवा सशर्करमेव मधुघृताभ्यां लिह्यात् । सुबोधम । घृतेन भृष्टे सशर्करे च तिल्वकपत्रे संभावितेनान्नेन पेया चोत्कारिका वा कार्या । उत्कारिका खिन्नपिण्डी ॥

गौरसर्षपगण्डीरविळंगव्योषचित्रकान् ।
साभयान् साधयेत्तोये यवागूस्तेन चाम्भसा॥
ससर्पिर्लवणा कासे हिध्माश्वासे सपीनसे ।
पाण्ड्वामये क्षये शोफे कर्णशूले च शस्यते ॥
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ।
सगौरामलकः साम्लः सर्वकासभिषग्जितम्
वातघ्नौषधनिष्क्वाथे क्षीरं यूषान् रसानपि ।
वैष्किरान् प्रातुदान् वैलान दापयेत् क्षयकासिने

गौरसर्षपादिक्वाथे सिद्धा पेया सघृतलवणा कासादिशमनी । सुबोधम् । क्षयकासे क्षीरादीन् विष्किरादींश्च रसान् वातघ्नानामौषधानां निष्क्वाथे सिद्धान् दद्यात् । वातघ्नानि शोधनादिगणसंग्रहोक्तानि भद्रदार्वादीनि ॥

क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ।
क्षयकासेऽपि ते योज्या वक्ष्यते यच्च यक्ष्मणि
बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम् ।
व्यत्यासात् क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते

क्षतकास इत्यादि सुबोधम् । बृंहणादिकं यत्किञ्चिद्राजयक्ष्मणि वक्ष्यते तत्सर्वमत्रापि हितम् । तच्च बृंहणादिव्यत्यासात् पर्यायेण सर्वं बल्यं शस्यते नाबल्यम् । सुबोधम् ॥

सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः ।
यथादोषबलं तस्य सन्निपातहितं हितम् ॥

इति क्षतक्षयकासचिकित्सितं नाम
पञ्चमोऽध्यायः ॥

यथादोषबलमिति दोषबलापेक्षया वातप्राधान्येन पित्तप्राधान्येन कफप्राधान्येन वा सन्निपातहितं हितमित्यर्थः ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चिकित्सिते पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ।

---

क्रमप्राप्तस्य श्वासस्य तदेकयोगक्षेमाया हिध्मायाश्च चिकित्सितप्रदर्शनार्थमध्यायारम्भः।

अथातः श्वासहिध्माचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

श्वासहिध्मा यतस्तुल्यहेत्वाद्याः साधनं ततः
तुल्यमेव तदार्तं च पूर्वं स्वेदैरुपाचरेत् ॥
स्निग्धैर्लवणतैलाक्तं स्रोतस्सु ग्रथितः कफः ।
तैर्लीनोऽपि विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः
भवेत् खेषु मृदुत्वं च मारुते चानुलोमता ।
स्विन्नं च भोजयेदन्नं स्निग्धमानूपजै रसैः ॥
दध्युत्तरेण वा—

निदानस्थानप्रदर्शितप्रकारेण श्वासे हिध्मायां च यतो हेत्वादिकं समानमतः साधनमपि समानमेव वेदितव्यम् । तदार्तमित्युभयस्य परिग्रहः । स्निग्धैरिति स्निग्धद्रव्यकृतैः स्वेदैः । तैरिति स्वेदैर्विलीनः कफः कोष्ठं प्राप्तः सुनिर्हरो भवेत् । स्रोतोमृदुत्वादिकं च भवेत् । दध्युत्तरेण वान्नं भोजयेदिति संबन्धः ।

— दद्यात्ततोऽस्मै वमनं मृदु ॥
विशेषात् कासवमथुहृद्ग्रहस्वरसादिने ।
पिप्पलीसैन्धवक्षौद्रयुक्तं वाताविरोधि यत् ॥
निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ।
स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥
ध्मानोदावर्ततमके मातुलुङ्गाम्लवेतसैः
हिङ्गुपीलुबिडैर्युक्तमन्नं स्यादनुलोमनम् ॥
ससैन्धवं फलाम्लं वा कोष्णं दद्याद्विरेचनम्

अस्मा इति श्वासहिध्मार्ताय कासादियुक्ताय विशेषेण वमनं दद्यात् । पिप्पलीत्यादि वमनविशेषणम् । स इत्यनन्तरोक्तो हिध्माश्वासवान् । अविहतोऽनावृतमार्गः । ध्मानमाध्मानम् । ससैन्धवेत्यादि विरेचनविशेषणम् ॥

एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ।
तस्मात्तन्मार्गशुद्ध्यर्थमूर्ध्वाधश्शोधनं हितम् ॥
उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम् ।
यथा तथानिलस्तस्य मार्गमस्माद्विशोधयेत् ॥

एते श्वासहिध्माश्च कफेन संरुद्धा गतिर्यस्य प्राणाख्यस्य वायोस्तत्प्रकोपाज्जायन्त इत्यतो मार्गविशुद्धिसंपादनार्थमूर्ध्वाधःशोधनं वमनं विरेचनं च हितम् । जलरोधदृष्टान्तः सुबोधः ॥

अशान्तौ कृतसंशुद्धेर्धूमैर्लीनं मलं हरेत् ।
हरिद्रापत्रमेरण्डमूलं लाक्षां मनःशिलाम् ॥
सदेवदार्वलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत् ।
तां घृताक्तां पिबेद्धूमं यवान् वा घृतसंयुतान् ॥
मधूच्छिष्टंसर्जरसंघृतंवागुरुवागुरु ।
* चन्दनंवाजश्रृङ्गंवावालान्वास्नाववागवाम् ॥
ऋश्यगोधाकुरङ्गैणचर्मश्रृङ्गखुराणि वा ।
गुल्गुलुं वा मनोह्वां वा सालनिर्यासमेव वा ॥
सल्लकीं गुल्गुलुं लोहं पद्मकं च घृताप्लुतम् ।

* चन्दनं वा तथाश्रृङ्गमिति पाठः ॥

कृतसंशुद्धेरपि दोषस्याशान्तौ ऋश्यादीनां यानि चर्मादीनि तानि च धूमः । ऋश्यो मृगभेदः । सल्लक्यादिकं मिश्रीभूतं घृताप्लुतं धूमः । सल्लकी सुरभिः ॥ (नि) सल्लकी सुरभिर्मोचामहेरुण्यश्वमूत्रिका । लोहमगरु ॥

अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणम् ।
स्वेदयेत् ससिताक्षीरसुखोष्णस्नेहसेचनैः ॥
उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः ।
उरः कण्ठं च मृदुभिः सामे त्वामविधिं चरेत् ॥

श्वासहिध्मापेक्षयावश्यं स्वेदनीयास्तेषामतिस्थूलरूक्षादित्वेनास्वेद्यानामपि उरः कण्ठं च क्षणं मृदुभिः स्वेदैः स्वेदयेत् । केनेत्याह ससितेत्यादि । उत्कारिका पिष्टस्विन्नपिण्डी । उपनाहः पिष्टबन्धः । सामे तु पुरुषे हिध्माश्वासयोरामविधिं लङ्घनपाचनादिकं चरेत् ॥

अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः ।
स्निग्धैरसाद्यैर्नात्युष्णैरभ्यङ्गैश्च शमं नयेत् ॥

शोधनादीनामपतर्पणानामतियोगेन वातमुद्धतं दृष्ट्वा तं वातनाशनद्रव्यसिद्धैः स्निग्धैश्च मांसरसादिभिः शमयेत् ॥

अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात् ।
वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥
कापायलेहस्नेहाद्यैस्तेषां संशमयेदतः ।

अनन्तरोक्तं च शोधनं कर्मानुत्क्लिष्टकफादी-

नां न योज्यं यतस्तेषां शोधनेन वायुर्लब्धास्पदो मर्म हृदयाख्यं संशोष्याशु प्राणान् हरेत् । अतो हेतोस्तेषामनुत्क्लिष्टकफादीनां कषायादिभिर्हिध्माश्वासान् शमयेत् ॥

क्षीणक्षतातिसारासृक्पित्तदाहानुबन्धजान् ॥
मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत् ।

क्षीणजान् क्षयजान अतीसाराद्यनुबन्धजांश्च हिध्माश्वासान् मधुराद्यैर्बृंहणैरुपक्रमैरुपाचरेत् ॥

कुलत्थदशमूलानां क्वाथे स्युर्जाङ्गला रसाः ।
यूषाश्च शिग्रुवार्ताककासघ्नवृषमूलकैः ॥
पल्लवैर्निम्बकुलकबृहतीमातुलुङ्गजैः ।

कुलत्थदशमूलानां पृथग्द्रव्याणां मिश्रीभूतानां च दशमूलानां यूषाश्च शिग्रुवादिभिर्मातुलुङ्गपल्लवान्तैः स्युरिति संबन्धः ॥

व्याघ्रीदुरालभाशृङ्गीबिल्वमध्यत्रिकण्टकैः ॥
सामृताग्निकुलत्थैश्च यूषः स्यात् क्वथितैर्जले ।
तद्वद्रास्नाबृहत्यादिबलामुद्गैः सचित्रकैः ॥

व्याघ्र्यादिभिर्जले क्वथितैरेको यूषः स्यात् । द्वितीयो यूषो रास्नादिभिः । बृहत्यादिशब्देन ह्रस्वपञ्चमूलं गृह्यते ॥

पेया च चित्रकाजाजीशृङ्गीसौवर्चलैर्हिता ।
दशमूलेन वा कासश्वासाहिध्मारुजापहा ॥
दशमूलषडीरास्नाभार्ङ्गीबिल्वर्धिपौष्करैः ।
कुलीरशृङ्गीचपलातामलक्यमृतौषधैः ॥
पिबेत् कषायं जीर्णेऽस्मिन् पेयां तैरेवसाधिताम्
शालिषष्टिकगोधूमयवमुद्गकुलत्थभुक् ॥
कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशान्तये ।
सक्तून्वार्काङ्कुरक्षीरभावितानांसमाक्षिकान्
यवानां दशमूलादिनिष्क्वाथलुलितान् पिबेत्

एका पेया चित्रकादिभिः द्वितीया दशमूलेन । दशमूलषड्यादिभिः कषायः । औषधं नागरम् । दशमूलषड्यादिभिः पेयां पीत्वा शाल्यादिभोजनः । अर्काङ्कुरक्षीरभावितानां यवानां संबन्धिनः सक्तून् दशमूलषडीरास्नादिनिष्क्वाथेनालोळितान् अनु पिबेत् ॥

अन्ने च योजयेत् क्षारहिङ्ग्वाज्यविळदाडिमान्
सपौष्करषडीव्योषमातुलुङ्गाम्लवेतसान् ॥
दशमूलस्य वा क्वाथमथवा देवदारुणः ।
पिबेद्वा वारुणीमण्डं हिध्माश्वासी पिपासितः

यवक्षारादीनि च दोषाद्यपेक्षयानेकप्रकारमन्ने योजयेत् । पिपासितश्च दशमूलक्वाथादिकं पिबेत् ॥

पिप्पलीपिप्पलीमूलपथ्याजन्तुघ्नचित्रकैः ।
कल्कितैर्लेपिते रूढे निक्षिपेत् घृतभाजने ॥
तक्रं मासस्थितं तद्धि दीपनं श्वासकासजित् ।
पाठां मधुरसां दारु सरळं च निशि स्थितम्॥
सुरामण्डेऽल्पलवणं पिबेत् प्रसृतसंमितम् ।

पिप्पल्याद्यैर्लेपोर्धाङ्गुलमात्रकः । रूढः कठिनीभूतलेपः । मधुरसा मूर्वा ।

सरलं पीडाख्यं देवदारुसदृशमेव । द्वे पले प्रसृतः ॥

शिरीषकुन्दकदलीकुसुमं पिप्पलीयुतम् ॥
तण्डुलाम्बुप्लुतं हिध्माश्वासकासहरं परम् ।
आरनालेन पिष्टा वा मातुलुङ्गरसान्वितान् ॥
हिङ्गुसौवर्चलकणाकोलमुद्गान् जलेन वा ।
कोष्णेन भार्ङ्गीं शुण्ठीं च क्षारं वा मरिचान्वितम्
स्वक्वाथपिष्टां लुलितां बाष्पिकां पाययेत वा ।

शिरीषादि सुबोधम् । हिङ्ग्वादिमुद्गान्तान् काञ्चिकेन पिष्टा पिबेत् मातुलुङ्गरसान्वितान् वा पिबेत् । जलेन कोष्णेन भार्ङ्गीशुण्ठ्यौ पिबेत् । मरिचयवक्षारं वा । सुबोधम् ॥

स्वरसं सप्तपर्णस्य पुष्पाणां वा शिरीषतः ॥
हिध्माश्वासे मधुकणायुक्तं पित्तकफानुगे ।
उत्कारिका तुकाकृष्णामधूलीगुळनागरैः ॥
पित्तानुबन्धे योक्तव्या पवने त्वनुबन्धिनि ।
श्वाविट्छशामिषकणाघृतशल्यकशोणितैः ॥

पित्तकफानुगे हिध्माश्वासे सप्तपर्णस्वरसो मधुपिप्पलीयुक्तः । शिरीषपुष्पस्वरसो वा मधुपिप्पलीयुक्तः । पित्तानुबन्धजे हिध्माश्वासे तुकादिभिरुत्कारिका योक्तव्या । तुका तुकाक्षीरी । मधूली मधुयष्टिः । वातानुबन्धजे पुनः श्वाविण्मांसादिभिः शल्यकशोणितान्तैरुत्कारिका ॥

सुवर्चलारसव्योषसर्पिर्भिः सहितं पयः ।
अनुशाल्योदनं पेयं वातपित्तेऽनुबन्धिनि ॥
चतुर्गुणाम्बुसिद्धं वा छागं सगुळनागरम् ।
पिप्पलीमूलमधुकगुळगोश्वशकृद्रसान् ॥
हिध्माभिष्यन्दकासघ्नान लिह्यान्मधुघृतान्वितान् ।

वातपित्तानुबन्धजे शाल्योदनमनुसुवर्चलारसादियुक्तं क्षीरं पेयम् । चतुर्गुणाम्बुसिद्धं छागं पयो वातपित्त एव । पिप्पलीमूलादिकं संमिश्रय मधुघृतान्वितम् । सुबोधम् ॥

गोगजाश्ववराहोष्ट्रखरमेषाजविड्रसान् ।
समध्वेकैकशो लिह्याद्बहुश्लेष्माथवा पिबेत् ॥
चतुष्पाच्चर्मरोमास्थिखुरशृङ्गोद्भवां मषीम् ।
तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोल्बणः
क्षारं वा त्रिफलापाठाबृहतीफलमूलजम् ।

गवादीनां विड्रसस्य समधोः पृथक्प्रयोगो बहुश्लेष्मणः । तस्यैव च चतुष्पाच्चर्माद्युद्भवः क्षारः । अश्वगन्धायाः केवलाया भस्म समधु । बृहतीफलमूलान्तानां क्षारः ॥

मुक्ताप्रवाळवैडूर्यशङ्खसौगन्धिकाञ्जनम् ॥
मसारगल्लस्फटिकाचैलालवणद्वयम् ॥
अपामार्गफलं ताम्रमयो रूप्यं शणात् फलम् ।
ज्योतीरसेन तल्लीह्यादयो नैकं मधुद्रवम् ॥

मुक्तादीनां ज्योतिष्मतीरसेन लेहः । प्रवाळः विद्रुमम । सौगन्धिकमल पद्मम् । मसारगल्लो मणिविशेषः । एतच्च मुक्तादिकं

चरकः क्षौद्रसर्पिषा पठति । केवलस्यायसश्चूर्णं मधुना ॥

षडीपौष्करधात्रीर्वा पौष्करं वा कणान्वितम् ॥
गैरिकाञ्जनकृष्णा वा स्वरसं वा कपित्थजम् ।
रसेन वा कपित्थस्य धात्रीसैन्धवपिप्पलीः ॥
घृतक्षौद्रेण वा पथ्या विळङ्गोषणपिप्पलीः ।
लिह्याद्वा पिप्पलीद्राक्षापथ्याशृङ्गीदुरालभाः
घृतमाक्षिकतैलैर्वा त्र्यूषणं क्षारसंयुतम् ।
पिप्पलीक्षौद्रयुक्तौ वा रसौ धात्रीकपित्थयोः ॥

षड्यादित्रयं मधुना । तद्वत् पिप्पलीपौष्करमूलम् । तद्वत् गैरिकादित्रयम । कपित्थफलजो रसो मधुनैव । धात्र्यादिकं कपित्थरसेन । पथ्यादिकं घृतक्षौद्रेण । ऊषणं मरिचम् । पिप्पल्यादिकं घृतक्षौद्रेण क्षारसंयुतं त्र्यूषणं घृतादिभिः ॥

सितोपलात्वामलकीद्राक्षागोश्वशकृद्रसम् ।
कोललाजमधुद्राक्षापिप्पलीनागराणि वा ॥
गुडतैलनिशाद्राक्षाकणारास्नोषणानि वा ।
पिबेद्रसाम्बुमद्याद्यैर्लेहौषधरजांसि वा ॥

सितोपलादिरर्धश्लोकेन एको लेहः । कोलादिना द्वितीयः । यैश्चौषधैरनन्तरं लेहा उक्तास्तान्येव द्रव्याणि तैरेव संयोगैश्चूर्णितानि दोषाद्यपेक्षया मांसरसादीनामन्यतमेन पिबेत् ॥

जीवन्तीमुस्तसुरसत्वगेलाद्वयपौष्करम् ।
चण्डातामलकीलोहभार्ङ्गीनागरवाळकम् ॥
कर्कटाख्याषडीकृष्णानागकेसरचोरकम् ।
उपयुक्तं यथाकामं चूर्णं द्विगुणशर्करम् ॥
पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम् ।
जीवन्ती चोरकः शृङ्गी पौष्करं सुरसः षडी ॥
पिप्पलीरविदक्षारशुण्ठीहिङ्ग्वम्लवेतसम् ।
एलातामलकीभार्ङ्गीवृक्षाम्लं चेति चूर्णितम् ॥
रसेन मातुलुङ्गस्य मद्येन हविषाथवा ।
लीढं प्रयुक्तमन्ने वा केवलं चोपयोजितम् ॥
हिध्माश्वासविबन्धार्शःकासहृत्पार्श्वशूलनुत् ।
षडीतामलकीभार्ङ्गीचण्डावाळकपौष्करम् ॥
शर्कराष्टगुणं चूर्णं हिध्माश्वासहरं परम् ।

जीवन्त्यादिकं चूर्णं यथाकामं यथेच्छमाहारपानादिना पानलेहादिना च । द्वितीयस्य जीवन्त्याद्यस्य रसेन मातुलुङ्गस्येत्याद्युपयोगविधानम् । षड्यादि सुबोधम् ॥

तुल्यं गुळं नागरं च भक्षयेन्नावयेत वा ॥
लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ।
चन्दनाद्वा रसं दद्यान्नारीक्षीरेण नावनम् ॥
सशर्करां पिप्पलीं वा मधुकं वा मधुद्रवम् ।
स्तन्येन मक्षिकाविष्ठामलक्तकरसेन वा ॥
ससैन्धवं घृताच्छं वा सिद्धं स्तन्येन वा घृतम्
कल्कैर्मधुरद्रव्यैस्तत् पिबेन्नावयेत वा ॥
सकृदुष्णं सकृच्छीतं व्यत्यासात् ससितं मधु
तद्वत् पयस्तथासिद्धमधोभागौषधैर्घृतम् ॥

तुल्यमित्यादि सुबोधम् । लशुनमूलादीनि नावनानि नारीक्षीरेण । चन्दनाद्रस एव । अलक्तकरसेन मक्षिकाविष्ठां नावयेदिति संबन्धः । अथवा तामपि स्तन्येन । घृताच्छं घृतमण्डम् । स्तन्येन सह घृतं मधुरस्कन्धकल्केन ससितं मधु प-

यो हितं पाननस्ययोः । व्यत्यासात् पर्यायेण । शीतं दत्वोष्णं दीयते पुनः शीतं पुनरुष्णम् । अधोभागौषधानि विरेचनानि ॥

कणासौवर्चलक्षारवयस्थाहिङ्गुचोरकैः ।
सकायस्थैर्घृतं मस्तु दशमूलरसे पचेत् ॥
तत् पिबेज्जीवनीयैर्वा लिह्यात् समधु साधितम्

मस्तुदशमूलक्वाथयोर्मिश्रितयोर्घृताच्चतुर्गुणत्वम् । कणादीनां परिभाषया कल्कः । वयस्था आमलकम् । कायस्था हरीतकी । जीवनीयैर्वा साधितं घृतं समधु लिह्यात् ॥

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ॥
पूतीकं पौष्करं मूलं पलाशश्चित्रकः शटी ।
पटुद्वयं तामलकी जीवन्ती बिल्वपेशिका ॥
वचापत्रं च तालीसं कर्षांशैस्तैर्विपाचयेत् ।
हिङ्गुपादैर्घृतप्रस्थं पीतमाशु निहन्ति तत् ॥
श्वासानिलार्शोग्रहणीहिध्माहृत्पार्श्ववेदनाः ।

तेजोवत्यादीनां पादः पलं कर्षचतुर्भागयुतम् । * जलं घृतसमं देयम् ॥

* जलं घृतसममित्यत्र व्याख्यानमेव प्रमाणम् । चरकपांस्तु "हिङ्गुपादैर्घृतप्रस्थं पचेत्तोये चतुर्गुणे" इति ॥

सिद्धं वा पुरमाञ्जिष्ठालाक्षासर्जरसैः पिबेत् ।
सपद्मकमनोह्वालैर्घृतप्रस्थं पिचून्मितैः ।

पुरादीनां पिचून्मितैरित्यनेन संबन्धः । पिचुरक्षः ॥

वत्सकादिप्रतीवापं सिद्धं वा प्रथमे गणे ॥
सपञ्चलवणं सर्पिः श्वासकासानपोहति ।

प्रथमो गणो विदार्यादिस्तत्क्वाथः स्नेहाच्चतुर्गुणः वत्सकादिगणः कल्कः पञ्चलवणानि सिद्धे ॥

हिंस्राबिडङ्गपूतीकत्रिकटुत्रिफलाग्निकैः ।
कोलमात्रैर्घृतप्रस्थं पाचयेत् सलिलाढके ।
क्षीरप्रस्थद्वयोपेतं तत् कासश्वासपीनसान् ॥
अर्शांस्यरोचकं गुल्मं क्षयं हिध्मां च नाशयेत्

हिंस्रादीनि कोलमात्राणि । हिंस्रा मांसी । पूतीकं करञ्जम ॥ कोलमर्धकर्षः ॥

सैन्धवार्धांशयुक्तं वा पुराणं पाययेद्घृतम् ।
धान्वन्तरं वृषघृतं दाधिकं त्र्यूषणादि वा ॥
शीताम्बुसेकः सहसा त्रासविक्षेपभीशुचः ।
हर्षेर्ष्योच्छ्वासरोधाश्च हितं कीटैश्च दंशनम् ॥
यत् किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम्
तत् सेव्यं प्रायशो यच्च सुतरां मारुतापहम् ॥

केवलं पुराणं सर्पिः सैन्धवस्यार्धभागेन युक्तम् । धान्वन्तरं प्रमेहोक्तम् । वृषघृतं रक्तपित्तोक्तम् । दाधिकं गुल्मोक्तम् । त्र्यूषणादि च छर्द्याद्युक्तम् । शीताम्बुसेकादिकं हितम् । कीटैश्च दंशनं भक्षणं वातवेगविघाताय । सुबोधम् । प्रायोग्रहणमशेषविषयत्वप्रतिषेधार्थम् ॥

वातकृद्वा कफहरं कफकृद्वानिलापहम् ॥

कार्यैनैकान्तिकंताभ्यांप्राय:श्रेयोऽनिलापहम्

हिध्माश्वासयोर्वातकफात्मकत्वात् वातकफयोश्चावार्यावारकभावेन स्थिते: कदाचिद्वातकृत् कर्म कफापहं कार्यम् । येनावारक: कफो नश्यत्यनावरणात् प्रतिहतजवश्च वायुर्वृद्ध: स्वमार्गं गृह्णाति । कदाचित्तु कफकृद्वातहरं येन कफो लीनत्वं परित्यजति वायुश्च चण्डवेग: शमं यात्येवमनेकान्तिकं हितं न त्वेकरूपतया । सर्वत्र चानिलापहं कर्म प्राय: श्रेय: द्वयोरातिशयेन प्रशस्यम् ॥

सर्वेषां बृंहणे ह्यल्प: शक्यश्च प्रायशो भवेत् ॥
नात्यर्थं शमनेऽपायो भृशोशक्यश्च कर्शने ।
शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत् ॥
कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजै: ।

इति श्वासहिध्माचिकित्सितं नाम
षष्ठोऽध्याय: ॥

तांश्च हिध्माश्वासान् शमनैर्बृंहणैश्च कर्मभिरुपाचरेत् न कर्शनेन । यत: सर्वेषां हिध्माश्वासानां बृंहणे क्रियमाणेऽल्पोपायो भवेन्न सद्योऽपि भवेत् सोऽपि चिकित्सितुं शक्यो भवेत् । शमने पुनरपाय एव न भवेत् । कर्शने तु भृशमपायो भवेत् । चिकित्सितुमशक्यो भवेत् । भूयिष्ठं बाहुल्येन कासादींश्च परस्परेणोपचरेत । यदेकस्यौषधं तच्छेषाणां चतुर्णामपीत्यर्थ: ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चिकित्सिते षष्ठोऽध्याय: ॥

---

# सप्तमोऽध्याय: ।

क्रमप्राप्तं राजयक्ष्मचिकित्सितं व्याख्यातुमध्यायारम्भ: ॥

अथातो राजयक्ष्मचिकित्सितं नामाध्यायं व्याख्यास्याम: । इति ह स्माहुरात्रेयादयो महर्षय: ॥

बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।
ऊर्ध्वाधो यक्ष्मिण: कुर्यात् सस्नेहं यन्न कर्शनम्
पयसा फलयुक्तेन मधुरेण रसेन वा ।
सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥
वमेद्विरेचनं दद्यात्त्रिवृच्छ्यामानृपद्रुमान् ।
शर्करामधुसर्पिर्भि: पयसा तर्पणेन वा ॥
द्राक्षाविदारीकाश्मर्यमांसानां वा रसैर्युतान्

बलिन इत्यादि सुबोधम् । ऊर्ध्वमिति वमनेन । अध इति विरेचनेन । पयसेत्यादिना वमेदिति संबध्यते । क्षीरेण वा मधुरेण मांसरसेन वा फलयुक्तेन । त्रिवृतादीन् पृथग्भूतान् शर्करादीनामन्यतमेन सह विरेचनं दद्यात् । तर्पणं सक्तव: । अथवा त्रिवृतादीन् द्राक्षादीनामन्यतमस्य रसेन युतान् ॥

शुद्धकोष्ठस्य युञ्जीत विधिं बृंहणदीपनम् ।
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥

शालिषष्टिकगोधूमयवमुद्गं समास्थितम् ।
लघुमच्युतवीर्यं च सुजरं बलकृच्च यत् ॥
आजं क्षीरं घृतं मांसं क्रव्यान्मांसं च शोषजित्
काकोलूकवृकद्वीपिगवाश्वनकुलोरगम् ॥
गृध्रभासखरोष्ट्रं च हितं छद्मोपसंहितम् ।
ज्ञातं जुगुप्सितं तद्धि छर्दिषे न बलौजसे ॥

शुद्धकोष्ठस्येत्यादि सुबोधम । समास्थितं संवत्सरोषितम् । काकादिकं छद्मोपसंहितम । तथा चरकः । काकांस्तित्तिरिशब्देन मत्स्यशब्देन चोरगान । दद्यान्मत्स्यान्त्रशब्देन पृथग्गण्डूपदानपीत्येवमादि । ज्ञातमित्यादि छद्मोपसंहितत्वे हेतुः ॥

मृगाद्याः पित्तकफयोः पवने प्रसहादयः ।
वेशवारीकृताः पथ्या रसादिषु च कल्पिताः
भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथम् ।
रसिका मृदवः स्निग्धाः पटुद्रव्याभिसंस्कृताः
हितामौद्गककौलत्थास्तद्वद्यूषाश्च साधिताः ।
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥
सडाडिमं सामलकं स्निग्धमाजं रसं पिबेत् ।
तेन षड्विनिवर्तन्ते विकाराः पीनसादयः ॥

मृगाद्याः मृगविष्किरप्रतुदविलेशयाः । शेषाः प्रसहादयः । वेशवारीकृता इत्यादि सर्वेषां विशेषणम् । रसिकादयः सर्वे आहारप्रकाराः । रसिका रसवन्तो भृष्टा भर्जिताः । सपिप्पलीकादि सुबोधम ॥

कोलडाडिमनिर्यासपिष्टयास्थिविहीनया ।
द्राक्षया स्वच्छधान्याम्बुप्लुतालोलितकल्कया
कार्यः सौवर्चलव्योष पत्रैलादीप्यकान्वितः ।
समाक्षिकः सकर्पूरः सलवङ्गः सकेसरः ॥
चन्द्रकान्तो यथार्थाख्यः शोषहाग्निरुचिप्रदः ।
शुक्ता*म्लधात्रीस्वरसैर्द्राक्षायाः कल्कितं पलम्
गुळषट्पलसंयुक्तं युक्तं श्लक्ष्णैश्च कार्षिकैः ।
वृक्षाम्लधान्यद्रामिळीराजिकाडाडिमोषणैः ॥
पलेन नागपुष्पस्य किञ्चित् सौवर्चलेन च ।
ससेव्यपत्रत्वक्तोयः सुरसारसमूर्छितः ॥
भूरिभूस्तृणकोरागःकण्ठ्योरुच्यःसमाक्षिकः
पिबेच्च सुतरां मद्यं जीर्णं स्रोतोविशोधनम् ॥
पित्तादिषु विशेषेण मध्वरिष्टाच्छवारुणीः ।
सिद्धं वा पञ्चमूलेन तामलक्याथवा जलम् ॥
पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा ।
कल्पयेच्चानुकूलोऽस्य तेनान्नं शुचियत्नवान ॥

* शुक्ताम्रधात्रीस्वरसैरिति पाठः ॥

स्वच्छधान्याम्लेनाप्लुत आलोळितश्च कल्को यस्या द्राक्षायास्तथा चन्द्रकान्तो नाम । द्राक्षारागः सुबोधः । पञ्चमूलेन तामलक्या वा सिद्धं जलं पिबेत् । तेनेति । पञ्चमूलाद्यम्भसा ॥

दशमूलेन पयसा सिद्धं मांसरसेन वा ॥
बलागर्भं घृतं योज्यं क्रव्यान्मांसरसेन वा ।
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥
जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
पुष्कराह्वं षटीं कृष्णां व्याघ्रीं गोक्षुरकं बलाम्॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।

कल्कीकृत्य घृतं पक्वं रोगराजहरं परम् ॥
दुरालभां गोक्षुरकं चतस्रः पर्णिनीर्बलाम् ।
भागान् पलोन्मितान् कृत्वा पलं पर्पटकस्य च
पचेद्दशगुणे तोये दशभागावशेषिते ।
पूते तस्मिन् घृतप्रस्थं क्षीरद्विगुणितं पचेत् ॥
गर्भं दत्वा षडीकृष्णाभूनिम्बोत्पलशारिवाः ।
त्रायन्तीं पौष्करं मूलं सहपत्रफलां फलम् ॥
कुटजाच्च जयेत्तद्धि शिरःपार्श्वांसवेदनाम् ।
तृष्णां छर्दिमतीसारं कासदाहभ्रमज्वरान् ॥

दशमूलेन पयसा मांसरसेन च बलागर्भं घृतम् । अथवा क्रव्यादानां मांसरसेन । सर्पिषो दशगुणेन च पयसा सिद्धं घृतं सक्षौद्रं योज्यम् जीवन्त्याद्ये जलं स्नेहसमम् * । दशगुणं तोयं दुरालभादिभ्यः । उत्पलशारिवा कृष्णमूलशारिवा । सहपत्रफला तामलकी । कुटजात् फलमिन्द्रयवः ॥

* स्नेहाच्चतुर्गुणं जलमित्यरुणदत्तः ॥

घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः ।
सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥
दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तत् परं स्वरबोधनम् ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।
पञ्चभिः पञ्चमूलैर्वा शृताद्यदुदियात् घृतम् ॥
पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ।
सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम् ॥
पञ्चकोलयवक्षारषट्पलेन पचेत् घृतम् ।
प्रस्थोन्मितं तुल्यपयः स्रोतसां तद्विशोधनम् ॥
गुल्मज्वरोदरप्लीहग्रहणीपाण्डुपीनसान् ।
कासश्वासाग्निसदनश्वयथूर्ध्वानिलान् जयेत् ॥

खर्जूरादिभिर्जलेन च पक्के घृते पिप्पल्याद्यश्चूर्णो योज्यः । नवं सर्पिर्नवनीतम् । पञ्च पञ्चमूलान्यायानि क्षीरकथने । ततः क्षीरादजातादेव घृतं नवनीतं ग्राह्यम् । तत् घृतं पञ्चपञ्चमूलक्काथे स्नेहाच्चतुर्गुणे विपाच्यम् । क्वाथात् क्षीरं चतुर्गुणम् । सप्तकं बलं कण्ठोध्वंसादिसप्तोपद्रवकृतम् । षट्पलेन प्रत्येकं द्रव्यपलिकम् । जलेन विना द्रव्याणां रसो न निर्यातीति स्मर्तव्यम् । अन्ये तु प्रतिपदपाठितत्वाद्द्रवस्य क्षीरस्य जलं नैवेच्छन्ति ॥

रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि ।
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषजिद्घृतम् ॥
अश्वगन्धाशृतात् क्षीरात् घृतं चससितापयः

रास्नादीनां क्काथे जीवन्तीपिप्पलीगर्भम् । गर्भः कल्कः । अश्वगन्धाशृतात् क्षीरात् प्रमथ्य गृहीतं घृतं शर्कराक्षीरसंयुतं शोषजित् ॥

साधारणामिषतुलां तोयद्रोणद्वये पचेत् ॥
तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः ।
साधयेत् सर्पिषः प्रस्थं वातपित्तामयापहम् ॥
मांससर्पिरिदं पीतं युक्तं मांसरसेन वा ।
कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित् ॥

साधारणानि मांसानि विलेशयप्रसहा-

नाम । तेनेति द्रोणद्वयपरामर्शः । मांसरसेन वा भोज्येषु प्रयुक्तम् ॥

यष्टीबलागुडूच्यल्पपञ्चमूलतुलां पचेत् ।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेत् घृतात् ॥
धात्रीविदारीक्षुरसत्रिपात्रे पयसोऽर्मणे ।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम् ।
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम् ।'

शूर्पो द्रोणद्वयं चतुर्विंशत्यधिकं सहस्रपलं जलस्य । पात्रमाढकमष्टाविंशत्यधिकं शतम् । अर्मणो द्रोणः । पञ्चशतानि द्वादशाधिकानि क्षीरस्य । जीवनीयानि स्नेहाच्चतुर्थांशेन ।'

मूर्वाहरिद्राखादिरकाथं सर्पिः शकृद्रसम् ।
गोगजाजाविहयजं पयस्तुल्यान् दश द्रवान् ।
स्वादुस्कन्धं त्रिकटुकं काल्किंतं देवदारु च ॥
पचेत्तच्चाशु शोषघ्नं तद्वद्वाशावरीघृतम् ।

दशद्रवाः देव्याः काथः हरिद्रायाः खदिरस्य च घृतं गोः शकृद्रसः गजस्य अजस्य अवेर्हयस्य च तथा क्षीरम । कल्कोद्दृताच्चतुर्थांशः । वाशावरीभ्यां वाशाशतावरीभ्याम् ॥

द्विपञ्चमूलवरणयवबिल्वपुनर्नवाः ॥
करञ्जबोळस्थविरकुलत्थबदराग्निकाः ।
भल्लातकं च तत्काथे षड्गुणे साधयेत् घृतम्
गर्भे दत्वा स्नुहीक्षीरं शुकाख्याचव्यसैन्धवम्
हरीतकीं च तच्छोषशोफमेहोदरापहम् ॥

द्वे पञ्चमूले आद्ये । बोळस्थविरं बोळवृक्षः । कुलहलोऽलम्बुसोभूकदम्बकः । कुटकदेशे मुण्डिकेति प्रसिद्धः । तत्काथः परिभाषया घृतात् षड्गुणः । शुकाख्या शुक्लाख्या ॥

यवाग्वा वा पिबेन्मात्रां लिह्याद्वामधुनान्विताम्
सिद्धानां सर्पिषामेषां दद्यादन्नेन वा सह ।

एषां सर्पिषां यवाग्वादिना प्रयोगः । सिद्धानां निःसंशयानां व्याध्युपशमे ॥

एलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकान ॥
सारानरिष्टगायत्रीसालबीजकसंभवान् ।
भल्लातकं विळङ्गं च पृथगष्टपलोन्मितम् ॥
सलिले षोडशगुणे षोडशांशास्थितं पचेत् ।
पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन् पलानि षट्
तवक्षीर्याः क्षिपेत्त्रिंशत् सिताया द्विगुणं मधु ।
घृतात्त्रिजातात्त्रिपलं ततो लीढं खजाहतम् ॥
पयोनुपानं तत् प्राह्णे रसायनमयन्त्रणम् ।
मेध्यं चक्षुष्यमायुष्यं दीपनं हन्ति चाचिरात्
मेहगुल्मक्षयव्याधिपाण्डुरोगभगन्दरान् ।
ये च सर्पिर्गुळाःप्रोक्ताःक्षतेयोज्याःक्षयेऽपि ते

एलादिको लेहः सुबोधः । घृताद्द्विगुणं मधु । ये क्षते उरःक्षते प्रोक्ताः ते सर्पिर्गुळाः क्षयेऽपि राजयक्ष्माणि च योज्याः ॥

खर्जूरपिप्पलीद्राक्षापथ्याशृङ्गीदुरालभाः ।
त्रिफलापिप्पलीमुस्ताशृङ्गाटगुळशर्कराः ॥
वीरापडीपुष्कराख्यासुरसाशर्करागुडः ।

नागरं चित्रको लाजाः पिप्पल्यामलकं गुडः
विल्वङ्गसारश्चविकात्र्यूषणं च विचूर्णितम् ॥
अर्धश्लोकैः स्मृता लेहाः पञ्चैते मधुसर्पिषा ।
स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥

खर्जूरत्रिफलावीरानागरविलङ्गादिभिः - पञ्चभिरर्धश्लोकैः पञ्च क्षौद्रसर्पिषा लेहाः ॥

त्वगेलापिप्पलीक्षीरीशर्करा द्विगुणाः क्रमात् ।
चूर्णिता भक्षयेल्लिह्यात् पूर्ववद्वा तथागुणाः ॥
तिलमाषाश्वगन्धावामाक्षिकाजघृतद्रुताः ।
पूर्वोक्तेष्वेव रोगेषु वातप्रायेषु पूजिताः ॥

त्वचो द्विगुणाः एलास्ताभ्यः पिप्पल्यः ताभ्यस्तुकाक्षीरी तस्याः शर्करेति क्रमार्थः । एकद्विचतुरष्टषोडशांशा इत्यर्थः । तिलादिकं सुबोधम् ॥

स्वरसादचिकित्सितम् ।

विशेषात् स्वरसादेऽस्य नस्यधूमादि योजयेत्
तत्रापि वातजे कोष्णं पिबेदौत्तरभक्तिकम् ॥
कासमर्दकवार्ताकीमार्कवस्वरसैर्घृतम् ।
साधितं कासजित् स्वर्यं सिद्धमार्तगळेन वा
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।
तैलं वा मधुकद्राक्षापिप्पलीक्रिमिनुत्फलैः ॥
हंसपाद्याश्च मूलेन पक्वं नस्तो निषेचयेत् ।
सुखोदकानुपानं च ससर्पिष्कं गुळौदनम् ॥
अश्नीयात् पायसं चैवं स्निग्धं स्वेदंचयोजयेत्

यत्किञ्चिद्राजयक्ष्मण्युक्तं तदेकादशस्वपि रोगेषु चिकित्सितं सामान्येनोक्तमेव यत अत उच्यते । विशेषादित्यादि । सुबोधम् । [नि]रुजाकरस्त्वार्तगळो हिन्तालो भीषणाह्वयः । आर्द्राणि बदरीपत्राणि पिष्टानि कल्को भवति । मधुकादिभिः पक्वं तैलं वा नावने शस्तमिति सुखोदकानुपानं ससर्पिष्कं च ॥

पित्तोद्भवे पिबेत् सर्पिः शृतशीतपयोनुपः ॥
क्षीरिवृक्षाङ्कुरक्वाथकल्कसिद्धं समाक्षिकम् ।
अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम् ॥
बलाविदारगन्धाभ्यां विदार्यामधुकेन च ।
सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम् ॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला ।
साधितं क्षीरसर्पिश्च तत् स्वर्यं नावनं परम् ॥
लिह्यान्मधुरकाणां च चूर्णं मधुघृतान्वितम् ।
वरीं बलां पयस्यां वा काकोलीमधुके तथा ॥
एवमस्यानुपशमे ललाटे व्यधयेत् सिराम् ।

पित्तोद्भव इति स्वरसादे क्षीरिवृक्षाङ्कुरक्वाथकल्कसिद्धं समाक्षिकं च सर्पिः शृतशीतपयोनुपः पिबेदिति संबन्धः । सुबोधम् क्षीरसार्पिर्जातात् क्षीरात् कृतम् । अस्येति स्वरसादस्य ॥

पिबेत् कटूनि मूत्रेण कफजे रूक्षभोजनः ॥
कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम् ।
व्योषक्षाराग्निचविकाभार्ङ्गीपथ्यामधूनि वा ॥
यवैर्यवागूं यमके कणाधात्रीकृतां पिबेत् ।
भुक्त्वाद्यात्पिप्पलीं शुण्ठीं तीक्ष्णंवा वमनंभजेत्

कफजे स्वरपादे कटूनि मरिचादीनि रूक्षभोजनः सन् मूत्रेण पिबेत् । व्योषादीनि वा लिह्यात् यमकं घृततैले । भुक्त्वेति भोजनान्ते ॥

शर्कराक्षौद्रमिश्राणि शृतानि मधुरैः सह ।
पिबेत् पयांसि यस्योच्चैर्वदतो विहतः स्वरः ॥

यस्योच्चैर्भाषमाणस्य स्वरो विहतः स शर्करादिमिश्राणि पयांसि पिबेत् ॥

अरोचकचिकित्सितम् ।

विचित्रमन्नमरुचौ हितैरुपहितं हितम् ।
बहिरन्तर्मृजा चित्तनिर्वाणं हृद्यमौषधम् ॥
द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनैः ।
कषायैः क्षाळयेदास्यं धूमं प्रायोगिकं पिबेत् ॥
तालीसपत्रवटकाः सकर्पूरसितोपलाः ।
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम्

विचित्रेत्यादिनारोचकचिकित्सा । अपथ्यमपि प्रियं हितैर्मिश्रितं हितम् । बहिर्मृजा स्नानादिना । अन्तर्मृजा वमनविरेचनेन । चित्तनिर्वाणमानुकूल्येनाभिलाषनिर्वर्तनम् । द्वौ कालौ प्रातर्भुक्त्वा च । मुखधावनाः कषाया मुखरोगेषु वक्ष्यन्ते ॥

वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया ।
हरेणुकृष्णाक्रिमिजिद्द्राक्षासैन्धवनागरात् ॥
एलाभार्ङ्गीयवक्षारहिङ्गुयुक्ताद्घृतेन वा ।
छर्दयेद्वा वचाम्भोभिः पित्ताच्च गुळवारिभिः ॥
लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकम् ।
कफाद्वमेन्निम्बजलैर्दीप्यकारग्वधोदकम् ॥
पानं समध्वरिष्टाश्च तीक्ष्णाः समधुमाधवाः ।
पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा ॥
त्रिकटुत्रिफलारात्रीयवक्षारं मधुप्लुतम् ।
प्रातराहारकाले च युञ्जीत मुखधावनम् ॥

हरेण्वादिकाद्धिङ्ग्वन्ताच्चूर्णं प्रसन्नया वा घृतेन वा वातजेऽरोचके पिबेत् । पित्तादरोचक इति संबन्धः । गुळवारिभिश्छर्दयेदिति संबध्यते । लवणोत्तमं सैन्धवम् । कफात् सुबोधम् । समधुदीप्यकारग्वधोदकं पानम् । मधु मार्द्वीकम् । माधवं माक्षिकमद्यम् । पूर्वोक्तं हरेणुकृष्णादि । त्रिकट्वादि मुखधावनम् ॥

विडं सौवर्चलं कुष्ठमजाजीमरिचं सिता ।
धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ॥
लोध्रं तेजोवतीपथ्यायवक्षारं कटुत्रयम् ।
आर्द्रदाडिमनिर्यासः साजाजीसितशर्करः ॥
सतैलमाक्षिकायुक्ताश्चत्वारः कवळग्रहाः ।
चतुरोऽरोचकान् हन्युरेकदोषसमस्तजान् ॥
कारव्यजाजीमरिचद्राक्षावृक्षाम्लदाडिमम् ।
सौवर्चलगुळक्षौद्रं सर्वारोचकनाशनम् ॥

विडादिभिश्चतुर्भिरर्धश्लोकैश्चत्वारः कवळग्रहाः सर्वे सतैलमाक्षिकाश्चत्वारोऽरोचकान् क्रमेण हन्युः । विडादिकं वाते । धात्र्यादिकं पित्ते । लोध्रादिकं कफे । दाडिमनिर्यासेन सन्निपाते । कारव्यादिकं सुबोधम् ॥

एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम् ।
भागवृद्धं क्रमाच्चूर्णं निहन्ति समशर्करम् ॥
प्रसेकारुचिहृत्पार्श्वकासश्वासगळामयान् ।
यवानीतिन्त्रिणीकाम्लवेतसौषधडाडिमम् ॥
कृत्वा कोलं च कर्षांशं सितायाश्च चतुष्पलम्
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम ॥
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।
चूर्णमेतत् परं रुच्यं हृद्यं ग्राहि हिनस्ति च ॥
विबन्धकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान् ।

एलादिकं क्रमात् भागवृद्धम् । तेन यत्रैलानां कर्षः तत्र त्वचो द्वौ कर्षौ । नागकेसरस्य त्रयः । मरिचस्य चत्वारः । पिप्पलीनां पञ्च । शुण्ठ्याः षडिति । सर्वेषां समा शर्करा पञ्च पलानि सकर्षाणि । यवान्यादिके पिप्पलीनां मरिचस्य च फलानि संख्यया ॥

तालीसपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्धास्त्वगेले चार्धभागिके ॥
तद्वुच्यं दीपनं चूर्णं कणाष्टगुणशर्करम् ।
कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्वशूलजित् ॥
पाण्डुज्वरातिसारघ्नं मूढवातानुलोमनम् ।
तालीसपत्रचविकामरिचानां पलं पलम् ॥
कृष्णातन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम् ।
चतुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितम् ॥
तत्र त्रिंशत् पलं दत्वा कथितादमलाद्गुळात्
कुर्वीत मोदकानक्षसंमितांस्तेऽपि तद्गुणाः ॥

तालीसादयः यथोत्तरं भागवृद्धाः । यो यस्मादुत्तरः स तस्मात् भागेन वृद्धः । तेन तालीसं कर्ष द्वौ कर्षौ मरिचस्य । त्रयः शुण्ठ्याः । चत्वारः पिप्पलीनाम् । त्वगेले प्रत्येकं भागार्धमाने । भागश्च नियामकस्तालीसस्य तेन त्वचोऽर्धकर्षः तद्वदेलानाम् । कणाभ्योऽष्टगुणा शर्करा द्वात्रिंशत् कर्षाः । तालीसमोदकः सुबोधः । तदिति तालीसचूर्णस्य परामर्शः ॥

प्रसेकचिकित्सितम् ।

अर्कामृताक्षारजले शर्वरीमुषितैर्यवैः ।
प्रसेकेकल्पितान्सक्तून्भक्ष्यांश्चाद्याद्बलीवमेत्
कटुतिक्तैस्तथा शूल्यं भक्षयेज्जाङ्गलं पलम् ।
शुष्कांश्च भक्ष्यान् सुलघूंश्चणकादिरसानुपः ॥
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्यात् स्निग्धोष्णैरेव निर्जयेत्॥

अर्केत्यादिप्रसेकचिकित्सा । अर्कस्यामृतायाश्च क्षारजले एकां निशां यवानां वासो द्वितीयेऽह्नि तैः सक्तवो भक्ष्या नानाविधाः । यस्तु बली स कटुभिस्तिक्तैश्चौषधैर्वमेत् । सुबोधम् । तमिति वातहेतुकम् ॥

पीनसेऽपि क्रममिमं वमथौ च प्रयोजयेत् ।
विशेषात्पीनसेऽभ्यङ्गान स्नेहान् स्वेदांश्च शीलयेत् ॥
स्निग्धानुत्कारिकापिण्डैः शिरःपार्श्वगळादिषु

लवणाम्लकटूष्णांश्च रसान स्नेहोपसंहितान् ।

इममिति प्रसेकोक्तम । सुबोधम । रसान् मांसरसान् लवणादिगुणान् उपसंहिताः साहिताः ॥

शिरोंऽसपार्श्वशूलेषु यथादोषविधिं चरेत् ।
औदकानूपपिशितैरुपनाहाःसुसंस्कृताः ॥
शस्यन्ते सचतुस्नेहाः शिरःपार्श्वांसशूलिनाम्
लेपश्च नतयष्ट्याह्वशमाह्वाकुष्ठचन्दनैः ॥

शिरःशूलादिषु य एव दोषोधिकः तमेव प्रतिकुर्यात् । औदकानां पृथग्ग्रहणं प्राधान्यात । उपनाहः पिण्डबन्धः । नतादिभिश्चन्दनान्तैर्लेपः ॥

बलारास्नातिलाः सर्पिर्मधुकं नीलमुत्पलम् ।
पलङ्कषादेवदारु चन्दनं मधुकं घृतम् ॥
कृष्णगन्धा बला वीरा विदारी सपुनर्नवा ।
अभीरुयष्टीमधुकंपयस्याकर्तृणं घृतम् ॥
इत्यर्धयोगैश्चत्वारः प्रदेहाः परिकीर्तिताः ।
शस्ताः संसृष्टदोषाणां—

बलादिभिरर्धश्लोकैश्चत्वारः प्रदेहाः संसर्गे विकल्प्य यथादोषं योज्याः ॥

—शिरःपार्श्वांसशूलिनाम् ॥
नावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः ।
तैलान्यभ्यङ्गयोगीनि वास्तिकर्म तथापरम् ॥
शृङ्गाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक् ।
प्रदेहः सघृतैश्चेष्टः पद्मकोशीरचन्दनैः ॥
दूर्वामधुकमञ्जिष्ठाकेसरैर्वा घृताप्लुतैः ।
चन्दनाद्येन तैलेन शतधौतेन सर्पिषा ॥
अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना ।

तथा शिरःप्रभृतिशूलेषु नावनादिकमिष्यते । अथवैषां शूलिनां शृङ्गाद्यैर्दुष्टमसृग्घरेत् । वातेऽधिके शृङ्गेण । पित्तेऽधिके जलौकाभिः । कफे तुम्बेनेति यथादोषार्थः । पद्मकादिभिः सघृतैर्लेपः । तथा दूर्वादिभिः । शतधौतमनेकशो विलाप्य शीतजलैः स्थानीकृतम । क्षीरेण केवलेन सेको मधुकाम्बुना वा ॥

प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्यते ॥
तस्यातिसारग्रहणीविहितं हितमौषधम ।
सनागरानिन्द्रयवान् पाययेत्तण्डुलाम्बुना ॥
जीर्णेषु तेषु पेयां च चाङ्गेरीतक्रदाडिमैः ।
पाठानिम्बयवानीनां चूर्णं तक्रेण वा पिबेत् ॥
सुरयावाप्लुतां पाठां सनागरदुरालभाम् ।
जम्ब्वाम्रविल्वमध्यं वा सकपित्थं सनागरम्॥
पेयामण्डेन—

सर्वराजयक्ष्मी सपिच्छं प्रायेणातिसार्यते उपहताग्नित्वाद्धेतोरतिसारविहितं ग्रहणीविहितञ्च तत्र दोषाद्यपेक्ष्यौषधं हितम । सुबोधम् । पाठादीनां त्रयाणां सुरया पानम । जम्बूमध्यादिकं पेयामण्डेन ॥

—योगैश्च पाठाद्यैः कारयेत् त्रिभिः॥
ससूप्यधान्यान् सस्नेहान साम्लान् सलवणान खळान्

वेतसार्जुनजम्बूनां मृणालीकृष्णगन्धयोः ॥
श्रीपर्ण्यां मातुलुङ्गस्य धातक्या डाडिमस्य च
चाङ्गेर्या मदयन्त्याश्च यूथिकायाश्च पल्लवैः ॥
कालविद्‌दुग्धिकायाश्च चुक्रिकायाश्च योजयेत्
खळानदधिसरोपेतान्ससर्पिष्कानसडाडिमान्
रोचनान् दीपनान् दद्यादतीसारहरान् परम्

पाठाद्यास्त्रयो योगा अनन्तरोक्ताः । पाठानिम्बादिकः पाठानागरादिको जम्बूमध्यादिकश्च । एषां जलेन सस्नेहान् ससूप्यधान्यान् खळान् कारयेत् । खळः फलयूषः । वेतसेत्यादीनां षष्ठ्यन्तानां पल्लवैः खळान्योजयेत् । सर्वखळेषु च दधिसारिकत्वम् ॥

पुरीषं यत्नतो रक्षेच्छुष्यतो राजयक्ष्मिणः ॥
सर्वधातुक्षयार्तस्य बलं तस्य हि विड्वलम् ।

अस्य च राजयक्ष्मिणः शुष्यतः सतः पुरीषं यत्नतः क्षयाद्रक्षेत् । यतः सर्वस्यापि देहे यत् बलं तद्धातुहेतुकं भवति । राजयक्ष्मिणः पुनः क्षीणसकलधातुत्वात् विड्वलमेव बलं तस्य नरस्य विडेव बलमित्यर्थः । अतस्तं रक्षेत् ॥

ज्वरादिष्वपि कुर्वीत विकारेषु यथामयम् ॥
बह्वामयसमूहो हि यक्ष्मात. सोऽतिदुःसहः ।

ज्वरादिषु विकारेषु च राजयक्ष्मवतः स्वं स्वं चिकित्सितं कुर्वीत यथामयं आमयापेक्षया । यक्ष्मा चातोऽतिदुःसहः यतो नानाहेत्वादिबह्वामयसमूहः ॥

अजां वा पर्युपासीत षण्मासानुटजे वसन् ॥
तत्पयोमूत्रविड्वीत्तपरिषेकप्रघर्षणः ।
ताभिः परिवृतः स्वप्यात्तच्छकृद्रेणुसङ्करे ॥
एतद्रसायनं श्रेष्ठं रोगराजस्य नाशनम् ।
अजाशकृद्रसक्षीरदधिमूत्रैः शृतं घृतम् ॥
सपञ्चपटु पञ्चाजं क्षयी क्षीरानुपः पिबेत् ।
मांसमेवाश्नतो युक्त्या मार्द्वीकं पिबतोऽनु च
अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ।
सुरां समण्डां मार्द्वीकमरिष्टान् शीधुमाधवान्॥
यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ।
स्रोतोविबन्धमोक्षार्थं बलौजःपुष्टये च तत् ॥

उटजं वने लतावेश्म । तदित्यजापरामर्शः । रेणुश्चूर्णम् । पञ्चाजं घृतमप्याजमेव । अजाशकृद्रसादीनि च मिश्रीकृतानि स्नेहसमानि । पञ्चपटु स्तोकमात्रं सुबोधम् । तदित्यनन्तरोक्तं कर्म ॥

स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ।
उत्तीर्णं मिश्रकस्नेहैः पुनरक्तं सुखैः करैः ॥
मृद्नीयात् सुखमासीनं सुखं चोद्वर्तयेत् परम्

कोष्ठः काष्ठादिमयः स्नेहाद्याधारः उत्तीर्णमवगाहात् फललाभे सति । पुनरभ्यक्तं सुखं चासीनं सुखैः करैः मृद्नीयात् ॥

जीवन्तीं शतवीर्यां च विकसां सपुनर्नवाम् ।

अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ॥
विदारीं सर्षपान् कुष्ठं तण्डुलानतसीफलम् ।
माषांस्तिलांश्च किण्वं च सर्वमेकत्र चूर्णयेत् ॥
यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम् ।
एतदुद्वर्तनं कार्यं पुष्टिवर्णबलप्रदम् ॥

जीवन्त्यादिकं सर्वमेकीकृत्य चूर्णयेत् ततश्चूर्णात् त्रिगुणो यवचूर्णः । एतद्दधिमाक्षिकाभ्यामुद्वर्तनम ॥

गौरसर्षपकल्केन स्नानीयौषधिभिश्च सः ।
स्नायादृतुसुखैस्तोयैर्जीवनीयोपसाधितैः ॥

स चोद्वर्तितो गौरसर्षपकल्कादिभिः स्नायात् । स्नानीयानि स्नानेषूक्तान्यौषधानि । ओषधयः सर्वौषधयः । ऋतुसुखानि जलानि शीतोष्णविशेषेण ॥

गन्धमाल्यादिकां भूषामलक्ष्मीनाशनीं भजेत्
सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतीः ।
वस्तयः क्षीरसर्पींषि मद्यं मांसं सुशीलता ॥
दैवव्यपाश्रयं तद्वदथर्वोक्तं च पूजितम ।
इष्ट्या यया च चन्द्रस्य रजयक्ष्मा पुरा जितः
पुरोहितः प्रयुञ्जीत वेदोक्तां तां जितात्मनः

इति राजयक्ष्मचिकित्सितं नाम
सप्तमोऽध्यायः ॥

भूषा अलङ्करणम् । सुबोधम् । दैवव्यपाश्रयं तत्तन्मणिमन्त्रादिकम् । अथर्वोक्तमथर्वणदृष्टं शान्तिकादि । सुबोधम् । जितात्मनो जितेन्द्रियस्येति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चिकित्सिते सप्तमोऽध्यायः ॥

## अष्टमोऽध्यायः ।

क्रमप्राप्तस्य छर्द्यादिकस्य चिकित्साप्रदर्शनायाध्यायारम्भः ॥

अथातः छर्दिहृद्रोगतृष्णाचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

आमाशयोत्क्लेशभवाःप्रायश्छर्द्यो हितं ततः ।
लङ्घनं प्रागृते वायोः—

सर्वासु छर्दिषु प्रथमं सर्वं लङ्घनमिष्यते । वायुप्रभवां छर्दिं वर्जयित्वा । यतः प्रायेण छर्दय आमाशये यो दोषाणामुत्क्लेशः तत्प्रभवाः ॥

—वमनं तत्र योजयेत् ॥
बलिनो बहुदोषस्य वमतः प्रततं बहु ।
ततो विरेकं क्रमशो हृद्यं मद्यैः फलाम्बुभिः ॥
क्षीरैर्वा सह स ह्यूर्ध्वं गतं दोषं नयत्यधः ।
शमनं चौषधं रूक्षदुर्बलस्य तदेव तु ॥

वमनं तत्रेत्यादिनावस्थाविशेषेषु लङ्घनविशेषा उच्यन्ते । तत इति वमने योजिते । स हीति विरेकः । रूक्षदुर्बलस्य तदेव शमनमेव । न तु बलिन उक्तं शोधनम् । बलवतस्तु सर्वम् ॥

परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते ।
उपवासस्तथा यूषा रसाः काम्बलिकाः खळाः
शाकानि लेहा भोज्यानि रागषाडवपानकाः ।
भक्ष्याःशुष्काविचित्राश्च फलानिस्नानघर्षणम्
गन्धाः सुगन्धयो गन्धफलपुष्पान्नपानजाः ॥
भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम् ।

परिशुष्कं द्रवरहितम् । रसादीनां लक्षणं कृतान्न उक्तम् । घर्षणं येन चूर्णेनाङ्गमुद्घृष्यते । गन्धाः सुगन्धयः सुरभय एव गन्धादिजाः । गन्धशब्देन गन्धद्रव्याण्युच्यन्ते॥

हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम् ।
किञ्चिदुष्णं विशेषेण सकासहृदयद्रवाम् ॥
व्योषत्रिलवणाढ्यं वा सिद्धं वा डाडिमाम्बुना
सशुण्ठीदधिधान्येन पीतं तुल्याम्बु वा पयः
व्यक्तसैन्धवसार्पिर्वा फलाम्लो वैष्किरो रसः
स्निग्धं च भोजनं शुण्ठीदधिडाडिमसाधितम्।
कोष्णं सलवणं चात्र हितं स्नेहविरेचनम् ।

वातजां छर्दिं ससैन्धवं सर्पिर्हन्ति । तद्धि सकासादिकां छर्दिं विशेषेण हन्ति । डाडिमक्काथेन सशुण्ठ्यादिकेन सर्पिः । तुल्याम्बु वा पयः पीतं मारुतजां छर्दिं हन्ति । व्यक्तं प्रभूतं सैन्धवं सर्पिश्च यस्मिन्वैष्किरे रसे । कोष्णं सलवणश्चेति भोजनविशेषणम् । अत्र च वातजायां छर्द्यां स्नेहविरेचनं हितम् ॥

पित्तजायां विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ।
सर्पिर्वा तैल्वकं योज्यं वृद्धं च श्लेष्मधामगम्
ऊर्ध्वमेव हरेत् पित्तं स्वादुतिक्तैर्विशुद्धिमान्।
पिबेन्मन्थं यवागूं वा लाजैः समधुशर्करैः ।
मुद्गजाङ्गलजैरद्याद्व्यञ्जनैः शालिषष्टिकम् ॥

पित्तजायां सुबोधम् । वृद्धं श्लेष्मस्थानाश्रितं स्वादुभिस्तिक्तैश्चौषधैः पित्तमूर्ध्वमेव हरेद्वामयेदेव न तु विरेचयेत् । यश्चैवं विशुद्धः स तदह्लाजैः समधुशर्करैर्मन्थं यवागूं वा पिबेत् सुबोधम् ॥

मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत् ।
मुद्गोशीरकणाधान्यैः सह वा संस्थितं निशाम्
द्राक्षारसं रसश्चेक्षोर्गुळूच्यम्बु पयोऽपि वा ।

तप्तमृल्लोष्टैस्तापयित्वा शीतीकृतम् । मुद्गादिभिर्वा सह निशां स्थितं सलिलं द्वितीयेऽह्नि पेयम् ॥

जम्ब्वाम्रपल्लवोशीरवटाश्वत्थाङ्कुरोद्भवः ।
क्वाथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति
छर्दिं ज्वरमतीसारं मूर्छां तृष्णां च दुर्जयाम्
धात्रीरसेन शीतं वा पिबेन्मुद्गदलाम्बु वा ॥
कोलमज्जासितालाजमक्षिकाविट्कणाञ्जनम् ।

कोलास्थिमज्जास्रोतोजलाजोत्पलरजांसि वा
लिह्यात् क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा
पिबेच्छीताम्बुना शालिस्वर्णगैरिकजं रजः ॥
पिष्टं वा चन्दनद्राक्षामांसीसेव्याम्बुगैरिकम् ।

जम्ब्वादिभिश्च क्वाथो वा शीतकषायो वा पीतः छर्यादीन्विनियच्छति नाशयति। एकोऽपि प्रयोगः क्षौद्रेण द्वितीयोऽपि । सुबोधम् । चन्दनादिकं पिष्टं शीताम्बुना पिबेत् ॥

शालितण्डुलतोयेन पिबेद्वा ससितामधु ॥
मधूकमधुकद्राक्षाकमलामलकाम्बुदम् ।
सशारिबापरूषाक्षं मूर्वां वा माक्षिकान्विताम्
मधुकं सात्मगुप्तं वा शीतं धात्रीरसेन वा ।

मधूकादिकं ससितामधु शालितण्डुलप्रक्षालनाम्बुना । मूर्वायाः समाक्षिकः प्रयोगः । मधुकं सात्मगुप्तं माक्षिकान्वितम् । शीतं चन्दनं धात्रीफलरसेन ॥

कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः ।
युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ॥

निम्बादिरसयुक्तेन कोष्णतोयेन कफजायां छर्द्यां वमेत् । दुर्बलस्योपवासो न वमनम् ॥

आरग्वधादेर्निर्यूहं शीतं क्षौद्रयुतं पिबेत् ।
त्रिफलाकणचव्याढ्यां पेयां पत्रैः करञ्जजैः ॥
मन्थान्यवैर्वा बहुशश्छर्दिघ्नौषधभावितैः ।
कफघ्नमन्नं हृद्यं च रागाः साजकभूस्तृणाः ॥

आरग्वधादेर्निर्यूहः कषायः सुशीतः । त्रिफलादिकानां निर्यूहः । करञ्जपत्रैः पेया छर्दिघ्नान्यौषधानि । लाजाम्लबदरडाडिमयवषष्टिकमातुलुङ्गसेव्यानि । जम्ब्वाम्रपल्लवानि च वमिनिग्रहणानि मृत्स्ना च । एषां क्वाथेन यवाः शुष्काः शुष्का भाव्यन्ते । तैः सक्तवः क्रियन्ते आर्जकं कुठेरकम् । सूक्ष्मैः पत्रैर्भूस्तृणम् ॥

लीढं मनश्शिलाकृष्णामरिचं बीजपूरकात् ।
स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत् ॥
समुस्तां मधुना शृङ्गीं कोलाम्लं वा सजाम्बवम्
तद्वद्विलङ्गत्रिफलाक्रिमिघ्नपरिपेलवम् ॥
तद्वद्दुरालभां खादेत् कपित्थं त्र्यूषणेन वा ।
अनुकूलोपचारेण याति द्विष्टार्थजा शमम् ॥
क्रिमिजा क्रिमिहृद्रोगगदितैश्च भिषग्जितैः ।
यथास्वं परिशिष्टाश्च तत्कृताश्च तथामयाः ॥

मनश्शिलादिकं कपित्थबीजपूरस्वरसमाक्षिकैः । कोलाम्लं सजाम्बवं मधुना । तद्वदिति मधुना विळङ्गं त्रिफला चैकः प्रयोगः । द्वितीयो विळङ्गपरिपेलवाभ्याम् । दुरालभां तद्वदिति मधुना । त्र्यूषणेन सह कपित्थं खादेत् । सुबोधम् । परिशेषाः छर्दयस्तृष्णामदौहृदजास्ता यथास्वं वाताद्यौषधेन च शमं यान्ति । तत्कृतास्तृष्णाछर्द्यादिकृता आमया यथास्वमौषधैः शमं यान्ति ॥

त्वरमाणो जयेच्छर्दिं प्रसक्तामनुबन्धिनीम् ।

कोष्ठाश्रयमहामर्मपीडाकरतरा हि सा ॥

प्रसक्तां गृहीतानुबन्धां छर्दिं त्वरमाणो जयेद्यतः सा छर्दिर्महामर्मणो हृदयस्य कोष्ठाश्रयत्वात् पीडाकरतरा भवति ॥

नचान्नेन विना कायस्तन्मयो वर्ततेऽपि च ।
धातुक्षयोऽतिवमथौ समीरणसमीरणात् ॥
नियतं जायते तस्माद्द्रुतं तत्र प्रयोजयेत् ।
प्रच्छर्दनातियोगोक्तं क्रमं स्तंभनबृंहणम् ॥
सर्पिर्गुडात्रसान् क्षीरं घृतं कल्याणजीवनम् ।
धान्वन्तरं त्र्यूषणं वा दोषदेहानुरोधतः ॥

अन्नस्य च वमनात्तन्मयः कायो न च वर्तते । अपि चेति समुच्चये । सुबोधम् । तत्र वमथौ वमनातियोगोक्तं क्रमं द्रुतं शीघ्रं योजयेत् । सुबोधम ॥

## हृद्रोगचिकित्सितम् ।

हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत् ।
पिबेत्सुखोष्णं सविडं गुल्मानाहार्तिजिच्च तत् ।
तैलं च लवणैः सिद्धं समूत्राम्लं तथागुणम् ।

हृद्रोग इत्यादिना हृद्रोगचिकित्सा । वातजे मस्त्वादियुक्तं तैलं पिबेत् । तच्च गुल्मादिजित् भवति । गोमूत्रेणाम्लेन च काञ्जिकादिना सर्वैश्च लवणैः पक्कं पूर्वगुणम् ।
पृथक् स्नेहसमं कुर्यात् पञ्चप्रभृति तु द्रवम् ॥

विल्वं रास्नां यवान् कोलं देवदारु पुनर्नवम् ।
कुलत्थान् पञ्चमूलं च पक्त्वा तस्मिन् जले पचेत्
तैलं तन्नावने पाने वस्तौ च विनियोजयेत् ॥

विल्वादीनां क्वाथे तैलचतुर्गुणे सिद्धं तैलं हृद्रोगवतो नावनादिषु प्रयोजयेत् ॥

शुण्ठीवयस्थालवणकायस्थाहिङ्गुपौष्करैः ।
पथ्यया च भृतं पार्श्वहृद्रुजागुल्मजिद्घृतम् ॥
सौवर्चलस्य द्विपले पथ्यापञ्चाशदन्विते ।
घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मनुत् ॥
डाडिमं कृष्णलवणं हिङ्गुशुण्ठ्यम्लवेतसम् ।
अपतन्त्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमम् ॥

शुण्ठ्यादीनां कल्केनानुक्तेनापि जलेन * स्नेहसमेन पक्कं घृतं पार्श्वहृद्रुजागुल्मजित् सुबोधम् ॥

* एष चिन्त्यः ॥

पुष्कराह्वषडीशुण्ठीवीजपूरजटाभयाः ।
पीताः कल्कीकृताः क्षारघृताम्ललवणैर्युताः ॥
विकर्तिकाशूलहराः क्वाथः कोष्णश्च तद्गुणः ॥

पुष्करमूलादीनां कल्कः क्षारादियुतो विकर्तिकाशूलहरः । विकर्तिका विकर्तनमिव जठरे ॥

यवानीलवणक्षारवचाजाज्यौषधैः कृतः ।
सपीतदारुवीजाह्वपलाशषडिपौष्करैः ॥
पञ्चकोलषडीपथ्यागुळबीजाह्वपौष्करम् ।
वारुणीकल्कितं भृष्टं यमके लवणान्वितम् ॥
हृत्पार्श्वयोनिशूलेषु खादेत् गुल्मोदरेषु च ।
स्निग्धाश्चेह हिताः स्वेदाः संस्कृतानि घृतानि च

लघुना पञ्चमूलेन शुण्ठ्या वा साधितं जलम्
वारुणीदधिमण्डं वा धान्याम्लं वा पिबेत्तृषि
सायामस्तम्भशूलामे हृदि मारुतदूषिते ।
क्रियैषा सद्रवायामप्रमोहे तु हिता रसाः ॥
स्नेहाढ्यास्तित्तिरिक्रौञ्चशिखिवर्तकदक्षजाः ।
बलातैलं सहृद्रोगी पिबेद्वा सुकुमारकम् ॥
यष्ट्याह्वशतपाकं वा महास्नेहं तथोत्तमम ।
रास्नाजीवकजीवन्तीबलाव्याघ्रीपुनर्नवैः ॥
भार्ङ्गीस्थिरावचाव्योषैर्महास्नेहं विपाचयेत् ।
दधिपादं तथाम्लैश्च लाभतः स निषेवितः॥
तर्पणो बृंहणो बल्यो वातहृद्रोगनाशनः ।

यवान्यादीनां पौष्करान्तानां क्वाथः कोष्णस्तद्गुणः । सुबोधम् ॥

त्र्यूषणत्रिफलापाठामधूकं मधुकं त्रुटी ।
पञ्चमूलं लघु बले मेदे ऋद्धिः शतावरी ॥
कण्टकरीतामलकीजीवकं चाक्षसंमितैः ।
तैः पचेत् सर्पिषः प्रस्थं दध्नः प्रस्थेन माहिषात्
युक्तं सिद्धं च मधुना तन्निहन्ति निषेवितम् ।
हृत्पाण्डुग्रहणीदोषकासश्वासहलीमकान ॥
दीप्तेऽग्नौ सद्रवायामे हृद्रोगे वातिके हितम ।
क्षीरं दधि गुडः सर्पिरौदकानूपमामिषम ॥
एतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि ।
शेषेषु स्तम्भजाड्यामसंयुक्तेऽपि च वातिके ॥
कफानुबन्धे तस्मिंस्तु रूक्षोष्णामाचरेत् क्रियाम्

त्र्यूषणादिकं सुबोधम । तच सिद्धं सन्मधुना योज्यते ॥

पैत्ते द्राक्षेक्षुनिर्यासससिताक्षौद्रपरूषकैः ।
युक्तो विरेको हृद्यः स्यात् क्रमः शुद्धे च पित्तहा
क्षतपित्तज्वरोक्तं च बाह्यान्तःपरिमार्जनम् ।
कट्वीमधुककल्कं च पिबेत् ससितमम्भसा ॥

पैत्त इति हृद्रोगे । विरेकः कल्पे वक्ष्यमाणो द्राक्षानिर्यासादिभिर्युक्तो हृद्यः स्यात् । क्षतोक्तं पित्तज्वरोक्तं च । बाह्यपरिमार्जनमभ्यङ्गादि । अन्तः शोधनं सुबोधम् ॥

श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः ।
बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितम् ॥
सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम् ।
प्रपौण्डरीकमधुकबिसग्रन्थिकशेरुकाः ॥
सशुण्ठीशैवलास्ताभिः सक्षीरं विपचेत् घृतम्
शीतं समधु तच्चेष्टं स्वादुवर्गकृतं च यत् ॥
वस्तिं च दद्यात् सक्षौद्रं तैलं मधुकसाधितम्

श्रेयस्यादिकल्कं सममाहिषक्षीरं माहिषं घृतम् । सुबोधम् । स्वादुवर्गो मधुरस्कन्धः । मधुयष्टीकल्कसाधितं सक्षौद्रं तैलं वस्तिः ॥

कफोद्भवे वमेत् स्विन्नः पिचुमन्दवचाम्भसा ॥
कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः ।
पिबेच्चूर्णं वचाहिङ्गुलवणद्वयनागरात् ॥
सैला यवानककणा यवक्षारात् सुखाम्बुना ।
फलधान्याम्लकौलत्थयूषमूत्रासवैस्तथा ॥
पुष्कराह्वाभयाशुण्ठीषडीरास्नावचाकणात् ।
क्वाथं तथाभयाशुण्ठीमाद्रीपीतद्रुकट्फलात् ॥

कफोद्भवे तु हृद्रोगे स्विन्नः सन् निम्बवचोदकेन वमेत् । कुलत्थरसादिभोजनः सन् वचादीनां चूर्णं सुखाम्बुफलधान्याम्लादीनामन्यतमेन पिबेत् । एकः पुष्करादीनां क्वाथो द्वितीयोऽभयादीनाम् । माद्री अतिविषा॥

क्वाथे रौहीतकाश्वत्थखदिरोदुम्बरार्जुने ।
सपलाशवटे व्योषत्रिवृच्चूर्णान्विते कृतः ॥
सुखोदकानुपानः स्याल्लेहः कफविकारहा ।
श्लेष्मगुल्मोदिताश्चापि क्षारांश्च विविधान् पिबेत्
प्रयोजयेच्छिलाह्वं वा ब्राह्मं चात्र रसायनम् ।
तथामलकलेहं वा प्राशं वागस्त्यनिर्मितम् ॥

रौहीतकादिक्वाथे त्रिकटुत्रिवृच्चूर्णान्विते कृतो लेहः सुखोदकानुपानस्य सतः श्लेष्मविकारहा । सुबोधम् । शिलाह्वब्राह्मौ रसायनविधौ वक्ष्येते । आमलकलेहश्च्यवनप्राशः ॥

स्याच्छूलं यस्य भुक्तेऽति जीर्यत्यल्पं जरां गते
शाम्येत् सकुष्ठकृमिजित्लवणद्वयतिल्वकैः ॥
सदेवदार्वतिविषैश्चूर्णमुष्णाम्बुना पिबेत् ।
यस्य जीर्णेऽधिकं स्नेहैः स विरेच्यः फलैः पुनः
जीर्यत्यन्ने तथा मूलैस्तीक्ष्णैः शूले सदाधिके
प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये यतः॥
तस्यानुलोमनं कार्यं शुद्धिलङ्घनपाचनैः ।
कृमिघ्नमौषधं सर्वं कृमिजे हृदयामये ॥

यस्य भुक्तेऽति शूलं जीर्यत्यन्ने मन्दीभवति जरां गते शाम्यति स पुरुषः कुष्ठादिभिश्चूर्णमुष्णाम्बुना पिबेत् । यस्य जीर्णे शूलमधिकं सः स्नेहैरेरण्डादिभिः । जीर्यत्यन्नेऽधिके शूले हरीतक्यादिभिर्विरेच्यः । सदाधिके शूले तीक्ष्णैर्मूलैर्विरेच्यः ॥

## तृष्णाचिकित्सितम् ।

तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते ।
सर्वासु शीतो बाह्यान्तस्तथा शमनशोधनः ॥
दिव्याम्बु शीतं सक्षौद्रं तद्वद्भौमं च तद्गुणम्
निर्वापितं तप्तलोष्टकपालसिकतादिभिः ॥

तृष्णास्वित्यादि सुबोधम् । तप्तलोष्टादिभिर्निर्वापितं यत्र ते मग्नाः ॥

सशर्करं वा क्वथितं पञ्चमूलेन वा जलम् ।
दर्भपूर्वेण मन्थश्च प्रशस्तो लाजसक्तुभिः ॥
वाट्यश्चामयवैः शीतः शर्करामाक्षिकान्वितः ।
यवागूः शालिभिस्तद्वत् कोद्रवैश्च चिरन्तनैः ॥

दर्भपूर्वेण पञ्चमूलेन क्वथितं सशर्करम् । वाट्यो यवौदनः ॥

शीतेन शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनम् ।
हिमाम्बुपरिषिक्तस्य पयसा सासितामधु ॥
रसैश्चानम्ललवणैर्जाङ्गलैर्घृतभर्जितैः ।
मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ॥

शीतेनेत्यादि पयसो विशेषणम् । हिमाम्बुपरिषिक्तस्य दुग्धस्य सासितामधु भोजनम् ॥

नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसः ।

नारीक्षीरेण वा घृष्टमुष्टास्थि ससितं हितम् ॥

शीतैरौषधैः सिद्धं क्षीरोद्भवं घृतं नस्यम् । इक्षुरसः केवल एव सुबोधम् ॥

निर्वापणाश्च गण्डूषाः सूत्रस्थानोदिता हिताः
दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ॥
महासरिद्ध्रदादीनां दर्शनस्मरणादि च ।
तृष्णायां पवनोत्थायां सगुळं दधि शस्यते ॥
रसाश्च बृंहणाः शीता विदार्यादिगणाम्बु च

निर्वापणाः संशमनाः । ज्वरघ्ना लेपसेकादयः । निरीहत्वमास्यासुखम् । सुबोधम् ॥

पित्तजायां सितायुक्तः पक्वोदुम्बरजो रसः ॥
तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बु वा
तद्विधैश्च गणैः शीतकषायान् ससितामधून् ॥
मधुरैरौषधैस्तद्वत् क्षीरिवृक्षैश्च कल्पितान् ।

तदित्युदुम्बरपरामर्शः । तद्विधा गणाः शारिवादिसमाः दाहादिशमनाः । मधुरैरौषधैस्तद्वदिति शीतकषायान् ससितामधून् । क्षीरिवृक्षैः वटादिभिः ॥

बीजपूरकमृद्वीकावटवेतसपल्लवान् ॥
मूलानि कुशकाशानां यष्ट्याह्वं च जले शृतम्
अपाकशर्कराच्छिन्नरुहालोद्ध्राञ्जनाम्बु वा
कार्पासीफलकल्कं वा ससितक्षीरभोजनः ।

बीजपूरपल्लवादीनां क्वाथः । सुबोधम् । अपाकशर्कराः कुम्भकारचुल्लीषत्पक्वलोष्टानि । बालिशा शर्करेत्यन्ये ॥

ज्वरोदितं वा द्राक्षादि पञ्चसाराम्बु वा पिबेत्

ज्वरोदितो द्राक्षादिः शीतकषायः । पञ्चसाराम्बु मधुखर्जूरादिरक्तपित्तपठितम् ॥

कफोद्भवायां वमनं निम्बप्रसववारिणा ।
विल्वाढकीपञ्चकोलदर्भपञ्चकसाधितम् ॥
जलं पिबेद्रजन्या वा सिद्धं सक्षौद्रशर्करम् ।
मुद्गयूषं च सव्योषपटोलीनिम्बपल्लवम् ॥
यवान्नं तीक्ष्णकवळनस्यलेहांश्च शीलयेत् ।

कफोद्भवायामित्यादि सुबोधम् । विल्वादिसाधितं जलं पिबेत् । आढकी तुवरी ॥

सर्वैरामाच्च तद्धन्त्री क्रियेष्टा वमनं तथा ।
त्र्यूषणारुष्करवचाफलाम्लोष्णाम्बुमस्तुभिः ॥
अन्नात्ययान्मण्डमुष्णं हिमं मन्थं च कालवित्
तृषिश्रमान्मांसरसं मन्थं वा ससितं पिबेत् ॥
आतपात् ससितं मन्थं यवकोलजसक्तुभिः ।
सर्वाण्यङ्गानि लिम्पेच्च तिलपिण्याककाञ्जिकैः
शीतस्नानाच्च मद्याम्बु पिबेत्तृड्वान् गुडाम्बु वा
मद्यादर्धजलं मद्यं स्नातोऽम्ललवणैर्युतम् ॥

सर्वैः सन्निपातेन आमाच्च या तृष्णा तस्यां तद्धन्त्री सन्निपातघ्न्यामघ्नी च क्रिया हिता । त्र्यूषणादिकं फलाम्लाद्यन्यतमेन वमनम् । अन्नात्ययादन्नस्याऽभावात् तृष्णा । कालविदिति ग्रीष्मादिके पित्तकफाधिके वा । सर्वं पञ्चम्यन्तं तत्र हेतुर्विज्ञेयः । सुबोधम् ॥

स्नेहतीक्ष्णतराग्निस्तु स्वभावशिशिरं जलम् ।

स्नेहादुष्णाम्ब्वजीर्णात्तुजीर्णान्मण्डंपिपासितः
पिबेत् स्निग्धान्नतृषितो हिमस्पर्शं गुळोदकम्
गुर्वाद्यन्नेन तृषितः पीत्वोष्णाम्बु तदुल्लिखेत् ॥
क्षयजायां क्षयहितं सर्वं बृंहणमौषधम् ।
कृशदुर्बलरूक्षाणां क्षीरं छागो रसोऽथवा ॥
क्षीरं च सोर्ध्ववातायां क्षयकासहरैः शृतम् ।

स्नेहेत्यादिना स्नेहादिसंस्कृतस्य तृष्युक्तम् । अजीर्णात् स्नेहात् पिपासित उष्णाम्बु पिबेत् । जीर्णान्मण्डम् । स्निग्धान्नं मांसान्नक्षीरपेयादि । तदिति गुर्वाद्यन्नम् । उल्लिखेद्वमेत् ॥

रोगोपसर्गजातायां धान्याम्बु ससितामधु ।
पाने प्रशस्तं सर्वा च क्रिया रोगाद्यपेक्षया ॥

रोगोपसर्गजातायां ससितामधुधान्याम्बुपानं सुबोधम ॥

तृष्णक् पूर्वामयक्षीणो न लभेत जलं यदि ।
मरणं दीर्घरोगं वा प्राप्नुयात् त्वरितं ततः ॥
सात्म्यान्नपानभैषज्यैस्तृष्णांतस्यजयेत्पुरः ।
तस्यांजितायामन्योऽपिव्याधिःशक्यश्चिकि-
त्सितुम् ॥

इति छर्दिहृद्रोगतृष्णाचिकित्सितं नामाष्टमोऽध्यायः ॥

तत्र ह्युपसर्गजातायां तृष्णगतितृट् सन् पूर्वामयेन क्षीणो यदुपसर्गात्तृडुत्पन्ना स यदि जलं न प्राप्नुयात् अवश्यं मरणं दीर्घरोगं वाप्नुयात् । अतस्तस्य तां तृषं शीघ्रमेव सात्म्यैरन्नपानादिभिर्जयेत् । सुबोधम् ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
चिकित्सिते अष्टमोऽध्यायः ।

---

# नवमोऽध्यायः ।

---

क्रमप्राप्तं मदात्ययं निर्णेतुमध्याय आरभ्यते ॥

अथातो मदात्ययचिकित्सितं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

सर्वस्य मदात्ययस्य त्रिदोषजत्वादुच्यते॥

यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ।
कफस्थानानुपूर्व्या वा तुल्यदोषे मदात्यये ॥
पित्तमारुतपर्यन्तः प्रायेण हि मदात्ययः ।

यं दोषमित्यादि । यत्र पुनर्न कस्यचिदाधिक्यं सर्वे समाः तत्र कफस्थानानुपूर्व्या । आदौ कफः पश्चात् पित्तं ततो वायुः । अस्मिन् क्रमे युक्तिः पित्तमारुतेत्यादि । सर्वस्मिन् मदात्यये कालक्रमेण पित्तमारुतावधिकीभवतः । प्रथमं तु कफस्यैवाधिक्यम् ॥

हीनमिथ्यातिपीतेन यो व्याधिरुपजायते ।
समपीतेन तेनैव स मद्येनोपशाम्यति ॥

सात्म्याद्धीनपीतेन वा विपरीतपीतेन वातिपीतेन वा मद्येन यो व्याधिरुपजायते स तेनैव सात्म्येन समेन पीतेनोपशाम्यति ॥

कथं येनैव रोग उत्पन्नस्तेनैव शाम्यतीत्याह ॥

मद्यस्य विषसादृश्याद्विषं तूत्कर्षवृत्तिभिः ।
तीक्ष्णादिभिर्गुणैर्योगाद्विषान्तरमपेक्षते ॥

मद्यस्य विषसादृश्यात् । यथा विषं तीक्ष्णादिगुणयुतं तीक्ष्णादिगुणयुतेन विषेणैव शाम्यति । तद्वन्मद्यमपि मद्येन । मद्यास्त्वयं विषस्य विशेषः । यद्विषमुत्कृष्टैस्तीक्ष्णादिभिर्योगाद्विषान्तरं विजातीयं विषमपेक्षते मद्यं पुनः स्वल्पत्वात्तीक्ष्णादीनां सजातीयेनैवोपशाम्यति ॥

तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ।
मद्येनान्नरसक्लेदो विदग्धः क्षारतां गतः ॥
यान् कुर्यान्मदतृण्मोहज्वरान्तर्दाहविभ्रमान् ।
मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतस्सु मारुत. ॥
सुतीव्रा वेदना याश्च शिरस्यस्थिषु सन्धिषु ।
जीर्णाममद्यदोषस्य प्रकांक्षालाघवे सति ॥
यौगिकं विधिवद्युक्तं मद्यमेव निहन्ति तान् ।

स्वभावत एव तीक्ष्णादिगुणवता मद्येनातिमात्रपीतेनान्नरसो विदग्धः क्षारगुणः सन् यान् मदादीन् कुर्यात् तान् मदादीन् काल उपयुक्तं विशिष्टं मद्यमेव नाशयति । तथा मद्योत्क्लिष्टेन दोषेण श्लेष्मणा स्रोतस्सु मारुतो रुद्धः सन् शिरःप्रभृतिषु याश्च वेदनाः कुर्यात्ता अपि मद्यमेव निहन्ति । कस्मिन् काल इत्याह जीर्णाममद्यदोषस्य आमा अभिनवा मद्यविकारा आममद्यदोषाः जीर्णा आममद्यदोषा यस्य तथा प्रकांक्षायां मद्यविषयायाम् । लाघवे तनुत्वे सति प्रयुक्तम् । किंभूतं मद्यं निहन्तीत्याह यौगिकं विधिवद्युक्तं च । दोषाद्यपेक्षया यदातुरस्य योगमर्हति तद्यौगिकम् । विधिस्त्वस्मिन्नेवाध्याये वक्ष्यते ॥

मद्योद्भवानां मद्येनैव शान्तेः प्रकारान्तरेण युक्तिरुच्यते ॥

क्षारो हि याति माधुर्यं शीघ्रमम्लोपसंहितः ।
मद्यमम्लेषु च श्रेष्ठं दोषविष्यन्दनादलम् ॥
तीक्ष्णोष्णाद्यैः पुराप्रोक्तैर्दीपनाद्यैस्तथागुणैः ।
सात्म्यत्वाच्च तदेवास्य धातुसाम्यकरं परम् ॥

क्षारो हीत्यादि । प्रथमेन मद्येनान्नरसे क्षारतां गते रोगा उत्पद्यन्ते । क्षारश्चाम्लोपसंहितः सन् माधुर्यं शीघ्रं याति । अम्लेषु च मद्यं श्रेष्ठमतस्तदेव विकारनाशनम् । तथा तीक्ष्णोष्णाद्यैः पुरा निदानस्थानप्रोक्तैः दीपनाद्यैश्च दोषाणां विष्यन्दनात् स्रावणात्तदेव पथ्यम् । अस्य च पुरुषस्य सात्म्यत्वाद्धेतोस्तदेव परं धातुसाम्यकरम् ॥

सप्ताहमष्टरात्रं वा कुर्यात् पानात्ययौषधम् ।
जीर्यत्येतावता पानं कालेन विपथाश्रितम् ॥

इह मदात्ययोद्देशे औषधमुक्तं तत् सप्ताहमष्टरात्रं वा कुर्यात् । एतावता हि कालेन विमार्गस्थं मद्यं जीर्यतीति ॥

परं ततोऽनुबध्नाति यो रोगस्तस्य भेषजम् ।
यथायथं प्रयुञ्जीत कृतपानात्ययौषधम् ॥

तत ऊर्ध्वं य एव रोगः कृतपानात्ययौषधमातुरमनुबध्नाति तस्यैव भेषजं कुर्यात् । यथायथमिति दोषाद्यपेक्षया स्वस्य प्रकरणे विहितम् ॥

तत्र वातोल्बणे मद्यं दद्यात् पिष्टकृतं युतम् ।
बीजपूरकवृक्षाम्लकोलडाडिमदीप्यकैः ॥
यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः ।
शूल्यैर्मांसैर्हरितकैः स्नेहवद्भिश्च सक्तुभिः ॥
उष्णस्निग्धाम्ललवणा मेद्यमांसरसा हिताः ।
आम्राम्रातकपेशीभिः संस्कृता रागषाडवाः ॥

तत्रेत्यादिना पानात्ययौषधं प्रदर्श्यते । शालिपिष्टकृतं मद्यं बीजपूरकादिभिर्यथोपयोगं युक्तं मदात्यये वातोल्बणे दद्यात् । तत्र चोष्णादिगुणा मांसरसा हिताः । सुबोधम् । पेश्यः खण्डाः ॥

गोधूममाषविकृतीर्मृदुचित्रा सुखप्रियाः ।
आर्द्रिकार्द्रककुल्माषशुक्तमांसादिगर्भिणीः ॥
सुरभिर्लवणाशीतानिगदावाच्छवारुणी ।
स्वरसो डाडिमात् क्वाथः पञ्चमूलात् कनीयसः
शुण्ठीधान्यात्तथा मस्तु शुक्तांभोच्छाम्लकाञ्जिकम् ।
अभ्यङ्गोद्वर्तनस्नानमुष्णं प्रावरणं घनम् ॥
घनश्चागरुजो धूपः पङ्कश्चागरुकुङ्कुमात् ।

मृद्वादिगुणयुक्ता गोधूममाषविकृतीः चित्रा भक्ष्यादिनानेकप्रकाराः । तथा आर्द्रिकादिमिश्रा विकृतीः । कुल्माषोऽर्धस्विन्नानि सस्यानि । गर्भिणीरन्तरान्तरा युक्ताः । अच्छवारुणी सुरभित्वादिगुणयुक्ता हिता । सुबोधम् । शुण्ठीधान्यात् क्वाथः । धूपो घनः प्रभूतः । पङ्कः कर्दमः ॥

कुचोरुश्रोणिशालिन्यो यौवनोष्णाङ्गयष्टयः ॥
हर्षेणालिङ्गने युक्ताः प्रियाः संवाहनेषु च ।

प्रियाश्च हिताः । कीदृग्भूताः कुचादिभी रमणीयत्वेन याः श्लाघन्ते । याश्च यौवनोष्णाङ्गयष्टयो हर्षेण प्रीत्या आलिङ्गने संवाहनेषु च युक्ताः अनुरूपाः ॥

पित्तोल्बणे बहुजलं शार्करं मधु वा युतम् ॥
रसैर्डाडिमखर्जूरभव्यद्राक्षापरूषजैः ।
सुशीतंससितासक्तु योज्यं तादृक् च पानकम्
स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ।
शालिषष्टिकमश्नीयाच्छशाजैणकपिञ्जलैः ॥
सतीनमुद्गामलकपटोलीडाडिमैरपि ।

पित्तोल्बणे मदात्यये बहुना जलेन मिश्रितं शार्करं मधु मार्द्वीकं वा बहुजलं डा-

डिमादिजै रसैर्युक्तं उभयमपि योज्यं तच्च सुशीतत्वादिगुणरूपं योज्यम् । पानकमपि तादृक् सशर्करं ससक्तु च ॥

कफपित्ते समुत्क्लिष्टमुल्लिखेत्तृड्विदाहवान् ।
पीत्वाम्बु शीतं मद्यं वा भूरीक्षुरससंयुतम् ।
द्राक्षारसं वा संसर्गी तर्पणादिः परं हिताम्
तथाग्निर्दीप्यते तस्य दोषशेषान्नपाचकः ।
कासे स रक्तनिष्ठीवे पार्श्वस्तनरुजासु च ॥
तृष्णायां सविदाहायां सोत्क्लेशे हृदयोरसि ।
गुडूचीभद्रमुस्तानां पटोलस्याथवा रसम् ॥
सनागरं योजयेत तित्तिरिप्रतिभोजनम ।

कफपित्तमित्यादि सुबोधम् । संसर्गी- शोधनक्रमाख्या तर्पणादिका हिता । तर्पणाः सक्तवः पेयास्थाने तत्र योज्याः न तु पेयाः । तथा शोधनसंसर्गी क्रमेणाग्निर्दीप्यते योऽग्नि- र्दोषशेषमन्नं च पचति । कासादिके गुडू- च्यादीनां क्वाथः सनागरः । भोजनं तित्ति- रिणा रसादिप्रयुक्तेन ॥

तृष्येत चातिबलवद्वातपित्ते समुद्धते ।
दद्याद्द्राक्षारसं पानं शीतं दोषानुलोमनम् ॥
जीर्णेऽद्यान्मधुराम्लेन छागमांसरसेन च ।
तृष्यत्पशः पिबेन्मद्यं मदं रक्षन् बहूदकम् ॥
मुस्तदाडिमलाजाम्बु जलं वा पर्णिनीशृतम् ।
पाटल्युत्पलकन्दैर्वा स्वभावादेव वा हिमम ॥

तृष्यन इत्यादि सुबोधन् । जीर्ण इ- ति द्राक्षारसे । तृषि सत्यां अल्पमल्पं मद्यं पिबेत् यदा पिबेत्तदा बहुनोदकेन युक्तं पि- बेत् मदं रक्षन् मुस्ताद्यम्बु वा पर्णिनीचतुष्टयकृ- तं वा जल केवलमेव वा स्वभावशीतम् ॥

मद्यातिपानादब्धातौ क्षीणे तेजसि चोद्धते ।
यः शुष्कगलताल्वोष्ठो जिह्वां निष्क्रम्य वेष्टते॥
पाययेत् कामतोऽम्भस्तं निशीथपवनाहतम् ।
कोलडाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः ॥
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति

मद्यातिपानादित्यादि सुबोधम् । कामतो यथेच्छं तमातुरमम्भः पाययेद्रात्रौ प्रवातस्थि- तम् । कोलादिको मुखालेपो नाम्ना पञ्चा- म्लकस्तृष्णां सद्यो नियच्छति ॥

त्वचं प्राप्तश्च पानोष्मा पित्तरक्ताभिमूर्छितः ॥
दाहं प्रकुरुते घोरं विह्वलो येन मुह्यति ।
तृष्णादाहपरीतस्य तस्य दाहज्वरापहम् ॥
विधिं यथोक्तं युञ्जीत बाह्यान्तःपरिमार्जनम् ।

पानकृत ऊष्मा पित्तरक्ताभ्यां मिश्रि- तः सन् त्वचं प्राप्तो घोरं दाहं प्रकुरुते । येन दाहेन विह्वलोऽधीरो मुह्यति । तस्य तृष्णया दाहेन च परीतस्य यथोक्तं बाह्यान्तः परिमार्जनं दाहज्वरहरं विधिं कुर्वीत ॥

प्रभातमारुतोद्धूताः प्रालेयजलवर्षिणः ।
स्पर्श्यमाणा अपि घ्नन्ति दाहं मलयपादपाः ॥

मलयगिरौ ये चन्दनादयः पादपाः ते स्पर्श्यमाणा अपि दाहं घ्नन्ति । किंभू-

ताः प्रभातमारुतेन निशान्तवातेनोद्धूताः कम्पितास्तथा प्रालेयजलमवश्यायाम्भो ये वर्षन्ति ते तथाविधाः ॥

मुक्ताकलापाः शशिरश्मिशुभ्रा
　मृणालपद्मोत्पलपत्ररम्याः ।
सेकावगाहाः सजला जलार्द्रा
　वाताः सुशीता मणयो महार्हाः ॥

अलिञ्जराः पद्मपुटापिधानाः
　प्रवाळवर्णा हिमवारिपूर्णाः ।
परिस्रवन्तो दृतयो महान्तः
　पुताः प्रियादर्पणमण्डलानि ॥

नार्यश्च नेत्रोत्पलकर्णपूरा
　मध्यं वयः किञ्चिदिव स्पृशन्त्यः ।
मनोऽनुकूला हरिचन्दनार्द्रा-
　स्तृड्दाहमूर्छादवथून् जयन्ति ॥

मुक्ताकलापादयस्तृड्दाहादीन् जयन्ति । शशिरश्मिवद्धिमरश्मिकिरणवच्छुभ्राः शुक्लाः । सेकावगाहाश्च मृणाळादिभिश्चित्रा रम्याः ते च सजलाः वलाहकाः । तथा जलार्द्राः सिक्तपटाः । महार्हा उत्कृष्टाः । अलिञ्जरा मणिका महामृन्मया जलाधाराः । ते च पक्वत्वात् प्रवाळवर्णाः । महान्तश्च जलपूर्णत्वात् स्रवन्तो दृतयः । नेत्राण्येवोत्पलानि तान्येवायतत्वात् कर्णपूरा यासाम् । मध्यं वयः किञ्चिदिव स्पृशन्त्यः ईषद्विलसितनवयौवनाः । दवथुश्चक्षुरादिदाहः ॥

करेणुकाभिः परिवारितेन
　विक्षोभणं वारणयूथपेन ।
आस्फालनं शीकरवर्षणं च
　सिन्धोः स्मरन् दाहतृषोरगम्यः ॥

तस्य सिन्धोस्तस्माद्वा सिन्धोर्वारणयूथपेन करियूथपतिना विक्षोभणं जलास्फालनं करेण च शीकरवर्षणं स्मरन् पुरुषो दाहतृषोरगम्यो भवति । किंभूतेन करेणुकाभिर्वारणवधूभिः परिवारितेन ॥

सरिद्ध्रदानां हिमवद्दरीणां
　चन्द्रोदयानां कमलाकराणाम् ।
मनोरमान्यापि कथा प्रवृत्ता ॥
　दाहं च तृष्णां च निहन्ति सद्यः ॥

सरिद्ध्रदादीनां कथा अन्याश्च मनोरमाः कथाः सद्यो दाहं तृष्णां च नियच्छन्ति । ह्रदाः नदीप्रवाहेष्वन्तरान्तरा महान्तो दूरावगाढाः शिशिरमन्दमन्दसञ्चारजलाशयाः । दरयो गिरिगुहाः ॥

लाजोत्पलोशीरकुचन्दनाम्बु
　शीताभिधानं मधुशर्कराढ्यम् ।
मद्योद्भवां पित्तकृतां च तृष्णां
　सदाहशोषां विनिहन्ति पीतम् ॥

लाजादिमिश्रमम्बु प्रभूतमधुशर्करं नाम्ना शीतं मद्यादितृष्णां निहन्ति ।

प्रियङ्गुपत्रप्लवलोध्रसेव्य-
　ह्रीबेरकालेयकनागपुष्पैः ।
शीताम्बुपिष्टैर्नवकर्परस्थै-
　स्तृड्दाहहा सर्वशरीरलेपः ॥

प्रियङ्ग्वादिभिः शीताम्बुपिष्टैर्नवकर्परस्थैश्च सर्वशरीरलेपः तृड्दाहहा । पत्रं गन्धपत्रम । सेव्यमुशीरम । कर्परग्रहणं वाताहृतियोग्यपात्रोपलक्षणार्थम ॥

अशाम्यत्यथवा दाहे रसैस्तृप्तस्य जाङ्गलैः ।
शाखाश्रयां यथान्यायं रोहिणीं व्यधयेत्सिराम्

एवमप्यशाम्यति दाहे जाङ्गलै रसैः कृततृप्तेः पुरुषस्य रोहिणीं शुद्धशोणितवहां सिरां शाखाश्रितां व्यधयेत् । यथान्यायं सिराव्यधशास्त्रोक्तेन विधानेन ॥

उल्लेखनोपवासाभ्यां विजयेत कफोल्बणम् ।
तृषितोऽम्बु पिबेच्छीतं मुस्तया पर्पटेन वा ॥
स्थिराशुण्ठीबलोदीच्यदुस्पर्शान्यतमेन वा ।
सिद्धमेतच्च सर्वेषु पानदोषेषु शस्यते ॥

कफोल्बणं तु मदात्ययमुल्लेखनोपवासाभ्यां जयेत् । उल्लेखनं वमनम् । दोषाद्यपेक्षयैतयोरुपयोगः । तृषितश्च सन् कफमदात्ययी मुस्तया पर्पटकेन वा सिद्धमम्बु शीतं पिबेत् । स्थिरादीनामन्यतमेन वा सिद्धम । एतच्चाम्बु सर्वत्र मदात्यये शुद्धस्य दोषशेषे शस्यते ॥

निरामं क्षुधितं काले पाययेत् बहुमाक्षिकम् ।
शार्करं मधु वा जीर्णमरिष्टं शीधुमेव वा ॥
रूक्षतर्पणसंयुक्तं यवानीनागरान्वितम् ।

निरामं मदात्ययिनं क्षुधितं रूक्षैरस्नेहैस्तर्पणैर्लाजसक्तुभिः संयुक्तं शार्करं वा जीर्णं वा मधु द्राक्षारसमरिष्टं शीधुमेव वा बहुना माक्षिकेण युक्तं काले पाययेत् । तच्च सर्वं यवानीनागराभ्यां समन्वितम ॥

यूषेण यवगोधूमं तनुनाल्पेन भोजयेत् ॥

उष्णाम्लकटुतिक्तेन कौलत्थेनाल्पसर्पिषा ।
शुष्कमूलकजैश्छागै रसैर्वा धन्वचारिणाम् ॥
साम्लवेतसवृक्षाम्लपटोलीव्योषडाडिमैः ।

कौलत्थेन च यूषेण तनुना स्वल्पेन चोष्णादिगुणेनाल्पसर्पिषा यवगोधूमं भोजयेत् । रसैर्वा भोजयेत् । कैरित्याह शुष्कमूलकच्छागकृतैर्धन्वचारिणां संबन्धिभिः ॥

प्रभूतशुण्ठीमरिचहरितार्द्रकपेशिकम् ।
बीजपूररसाद्यम्लं भृष्टं नीरसवर्तितम् ॥
करीरकरमर्दादिरोचिष्णुबहुसाळनम् ।
प्रव्यक्ताष्टाङ्गलवणं विकल्पितनिमर्दकम् ॥
यथाग्नि भक्षयन्मांसं माधवं निगदं पिबेत् ।

तस्मिंश्च मदात्यये यथाग्नि मांसं भक्षयन् निगदं निर्दोषं माधवं पिबेत् । तच्च मांसं प्रभूतशुण्ठ्यादिकम् । आर्द्रकपेशिका आर्द्रकदलानि । बीजपूररसादिना चाम्लम् । भृष्टं घृते । * नीरसवर्तितं समाचिक्कणं पक्वम् । करीरादिकं रोचिष्णु बहु च साळनमुपदंशो यस्मिन् मांसे । तथा प्रव्यक्तं प्रभूतमष्टाङ्गाख्यं वक्ष्यमाणं लवणं यत्र । विकल्पिता निमर्दका येन मांसेन । मांस-

अग्निमन्थः । डुण्डुको मयूरजङ्घः । इतीक्ष्वाकुकल्पः ॥

धामार्गवो विशेषेण गरगुल्मोदरकासकफसश्चयोरस्थरोगेषु स्थिरेषु गुरुषु च श्लेष्माशयस्थे वातश्लेष्मणि च कण्ठाश्रये प्रकल्प्यः । जीवनीयान्यतमचूर्णसंयुक्तान् समधुशर्करांस्तत्कषायैर्लेहान् पित्तोपसर्जने श्लेष्मणि विदध्यात् ॥

धामार्गवो गरादिषु विशेषेण । द्विकोशातकीति पूर्वं यदुक्तं तत्र एका महाजालिन्याख्यान्या धामार्गवशब्देनोच्यते । कफस्य संचयः यथोक्तः । सुबोधम् । पित्तोपसर्जने श्लेष्मणि पित्तप्रधाने कफपित्ते । तत्कषायैर्धामार्गवकाथैर्लेहान् पूर्व एव विषये कल्पयेत् । किम्भूतान् जीवनीयानामन्यतमस्य चूर्णेन संयुक्तान् समधुशर्करांश्च ॥

सुमनःसौमनस्यायनीहरिद्राचोरकहैमवतीमहासहाक्षुद्रसहावृश्चीवबिम्बीपुनर्नवकासमर्दान्यतमकषायेण वा धामार्गवफलमेकं द्वे वा मनोविकारेषु ॥

सुमनःप्रभृतीनामन्यतमस्य वा कषायेण समधुशर्करान् लेहान् पूर्व एव विषये कल्पयेत । सौमनस्यायनी जातिपात्रिका । हैमवती काञ्चनी । महासहा माषपर्णी । क्षुद्रसहा मुद्गपर्णी । वृश्चीवः पुनर्नवाभेदः । बिम्बी रक्तफला तुण्डी तुण्डिकेरफला च सा । मनोविकारेषु मदादिष्वेवं धामार्गवफलं द्वे वा धामार्गवफले इति धामार्गवकल्पः ॥

कृतवेधनमत्यर्थकटुतीक्ष्णोष्णं सुतरां गरोदरगुल्मप्लीहपाण्डुरोगश्वयथुषु कल्पयेत् ॥

कृतवेधनमत्यर्थं कट्वादिगुणत्वात् गुल्मोदरादिषु सुतरां कल्पयेत् । कृतवेधनं द्वितीया कोशातकी । कोशातकी कृतच्छिद्रा जालिनी कृतवेधनी । क्ष्वेळा सुतिक्ता घण्टोली मृदङ्गफलिका मता ॥

कुटचफलं पुनः सुकुमारेषूल्बणास्रपित्तकफेषु वातशोणितविसर्पज्वरकुष्ठादिषु च योजयेत् । कुटचफलचूर्णान्यर्कक्षीरेण सप्ताहं भावयित्वा जीवककषायेण पिबेत् । फलजीमूतकेक्ष्वाकुजीवन्तीमूलान्यतमकषायेण वा सर्षपमधूकलवणान्यतमाम्भसा वा कुटचफलचूर्णं कृसरया वा वमनाय कल्पयेदिति । भवति चात्र ॥

कुटचफलमिन्द्रयवम् । सुकुमारेषूल्बणास्रादिषु च पुरुषेषु तथा वातशोणितादिषु रोगेषु च प्रयोजयेत् । सुबोधम् । जीवकः प्रसिद्धः । फलं मदनफलम् । मूलशब्देन जीवन्त्याः संबन्धः । सर्षपादीनामन्यतमेन संयुक्तमम्भस्तथोक्तम् । तेन सह वा कृसरा पेया गतानुगतिका ॥

वमनानां दिगित्येषा सुतरामुपयोगिनाम् । बीजेनानेन मतिमानन्यानपि च कल्पयेदिति ॥

इति कल्पस्थाने प्रथमोऽध्यायः ॥

इत्यनन्तरोक्तप्रकारेण वमनानां वमनद्रव्याणामेषा दिक् कल्पनामार्गः प्रदर्शितः ।

र्किंभूतानामाह । सुतरामुपयोगिनाम् । यथोक्तेन वर्जिन युक्त्यान्यानपि वमनादीन् कल्पयेन्मतिमान् प्राज्ञः । अप्राज्ञस्तु शास्त्रानुसारेण ऊहितुमशक्यत्वात् केवलं व्यापदा योजयतीति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां कल्पस्थाने प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ।

---

ऊर्ध्वशोधनमुक्त्वा अधःशोधनकल्पनाध्याय आरभ्यते ।

अथातो विरेचनकल्पं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

विरेचनद्रव्याणां मूलेषु त्रिवृत् । त्वक्षु तिल्वकः । क्षीरेषु स्नुही । फलेषु हरीतकी प्रधानानि । त्रिवृतायाः खलु द्विविधं मूलमरुणं श्यावं च । तत्रारुणं कषायमधुरं विपाके कटुकं रूक्षं श्लेष्मपित्तहरं कल्पनाविशेषात् पुनः सर्वव्याधिप्रशमनम् । सुखविरेचनत्वात् शिशुस्थविरसुकुमारमृदुकोष्ठेषु प्रशस्तं त्रिवृच्छब्दवाच्यं च ॥

दन्तीशङ्खिन्यादिमूलविरेचनद्रव्याणां त्रिवृत् प्रधानम् । रम्यकत्वगादीनां तिल्वकः । सप्तपर्णज्योतिष्मत्यादिक्षीराणां सुधाक्षीरं प्रधानमाशुफलत्वेन सुविषयत्वेन साधुकारित्वेन च । सुबोधम । कल्पनाविशेषाः संयोगसंस्कारादिकृताः । तदरुणं त्रिवृन्मूलं त्रिवृच्छब्दवाच्यम । उभयोक्तावपि ॥

इतरदपि तस्मात् गुणैः किञ्चिदूनं तीक्ष्णं कण्ठहृदयकर्षणं मूर्छासंमोहकृदाशुदोषहरत्वात् बहुदोषक्लेशक्षमक्रूरकोष्ठेषु प्रशस्तं श्यामाशब्दवाच्यं च ॥

इतरच्छ्यावम । तस्मादित्यरुणात् । गुणैः रसादिभिः । मूर्छा प्रळयः । संमोहोऽस्फुटज्ञत्वम् । तद्वच्छ्यावं त्रिवृन्मूलं श्यामाशब्दवाच्यम् । उभयोक्तावपि ॥

अथ तयोर्मूलमतिर्यग्विसृतं गम्भीरानुगतं श्लक्ष्णमाहरेत् । ततस्त्वचं शोषयित्वा सम्यक् सुगुप्तं स्थापयेत् ॥

तयोर्द्वयोरपि अतिर्यग्विसृतमधोगतम् । एवं गाढं भूमौ बहुप्रविष्टं गम्भीरानुगतम् । तत इति मूलात् सम्यक् सुगुप्तं कृत्वा स्थापयेत् यावत्प्रयोगकालम् ॥

तच्चूर्णं शुण्ठीसैन्धवयुक्तमम्लैर्मांसरसेन वा पिबेद्वातामयेषु । क्षीरक्षौद्रद्राक्षेक्षुकाष्मर्यस्वरससर्पिःस्वादुद्रव्यक्वाथैः सशर्करं पित्तोत्थेषु । मूत्रक्षौद्रद्राक्षारिष्टपीलुरसत्रिफलापञ्चकोलक्वाथैर्व्योषचूर्णानुविद्धं कफजेषु ॥

तच्चूर्णं त्रिवृन्मूलचूर्णं शुण्ठीसैन्धवसंयुक्तं अम्लैः काञ्जिकमद्यादिभिर्वा मांसरसेन

वा दोषाद्यपेक्षया वातामयेषु पिबेद्विरेकयोग्ये-षु । क्षीरादियुक्तं चूर्णं पित्तोत्थेषु दोषाद्यपे-क्षया सर्वथा वा सशर्करम् । कफव्याधिषु मूत्रादीनामन्यतमेन सर्वथा वा व्योषचूर्णा-नुविद्धम् ॥

एभिरेव च द्रव्यैर्यथास्वं घृतशर्करा-द्राक्षेक्षुरसतुकाक्षीरीमधुराणि मातुलुङ्गदाडि-मामलककोलकरमर्दकपित्थरसतक्राम्लानि सै न्धवलवणानि व्योषतीक्ष्णानि विविधवेश-वारपरिपूरितानि सहकाररसत्रिजातनागके-सरकर्पूरसुरभीणि लेहगुळिकामोदकभक्ष्य-भोज्यान्युपकल्पयेदिति । भवति चात्र ॥

एभिरेव विरेचनद्रव्यैस्त्रिवृच्चूर्णशुण्ठी-सैन्धवादिभिर्यथादोषं लेहादि कल्पयेत् । यत्र माधुर्यं घृतादिभिरेव । अम्लत्वं मातुलुङ्गादि-भिरेव । लावण्यं सैन्धवेनैव । तैक्ष्ण्यकार्यक-रणं व्योषेण । विविधैर्वेशवारैर्मांसधान्यकृतैः परिपूरणं संभवान्मोदकादीनां विशेषणम् । सहकारादि सर्वेषां विशेषणम् । सहका-रादिना सर्वत्र सुरभीकरणम । गतानुगतिका ॥

त्रिवृत्कल्ककषायेण साधितःससितो हिमः ॥
मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ।
अजगन्धातुकाक्षीरीविदारीशर्करात्रिवृत् ॥
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते
सन्निपातज्वरस्तम्भपिपासादाहपीडितः ॥

त्रिवृताले्हः सुबोधः । अजगन्धादि-ना चूर्णलेहं लीढ्वा सान्निपातज्वरादिपीडि-तः साधु विरिच्यते ॥

लिम्पेदन्तस्त्रिवृतया द्विधाकृत्वेक्षुगण्डिकम् ।
एकीकृत्य च तत्स्विन्नं पुटपाकेन भक्षयेत् ॥

इक्षुगन्धस्य दर्विपाटितस्यान्तस्त्रिवृत्प्र-लिप्तस्य पुनः संयोजितस्य पुटपाकेन स्वेदनं स्विन्नस्य च भक्षणम् ॥

त्वगेलाभ्यां समा नीलि तैस्त्रिवृत्तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥

त्वगेलाभ्यां समाभ्यामेको भागः द्वि-तीयो नल्यास्त्रिभिः समा त्रिवृत् सर्वसमा शर्करा एतच्चूर्णं द्राक्षादिफलरसादिना वात-पित्तकफव्याधिषु तर्पणं पिबेत् । एतच्चाल्पा-नलादिगुणेषु नरेषु निरपायमनुपद्रवं विरेचनम्। तर्पणशब्देन सक्तूनां बहुत्वं प्रतिपादितम् । एतत् पृथग्दोषक्षमं संसर्गसन्निपातयोश्च सं-योगभेदेन योज्यम् ॥

विळङ्गतण्डुलवरायावशूककणास्त्रिवृत् ।
सर्वतोऽर्धेन तल्लीढं मध्वाज्येन गुळेन वा ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् परिमार्ष्टि गदान् बहून्

विळङ्गतण्डुलादीनां समामिश्रितानाम-र्धेन त्रिवृत् गुडयोगे जलेन लेहः एतच्चूर्णं गुल्मादीनन्यांश्च कफवातकृतान् बहून् गदान् परिमार्ष्टि नाशयति ॥

विळङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान् ।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक् ।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुळार्धतुलान्वितान्
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रणः ॥
कुष्ठार्शःकामिलागुल्ममेहोदरभगन्दरान ।
ग्रहणीपाण्डुरोगांश्च हन्ति पुंसवनश्च सः ॥
गुळः कल्याणको नाम सर्वर्तुषु च यौगिकः ।
व्योषत्रिजातकाम्भोदक्रमिघ्नामलकैस्त्रिवृत् ॥
सर्वैः समा समसिता क्षौद्रेण गुळिकाः कृताः
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च
त्रिवृता कौटजं बीजं पिप्पलीविश्वभेषजम् ॥
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ।
त्रिवृद्दुरालभामुस्ताशर्करोदीच्यचन्दनम् ॥
द्राक्षाम्बुना सयष्ट्याह्वसातलं जलदात्यये ।
त्रिवृतां चित्रकं पाठामजाजीं सरळं वचाम् ॥
स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ।
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥
त्रिवृत्त्रायन्ति हपुषासातलाकटुरोहिणीः ।
स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ॥
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ।

विळङ्गादिना कल्याणकनामा गुडो वटकः । सुबोधम् । त्रिवृत्त्रायन्त्यादिकं सर्वर्तुषु । एतच्च स्निग्धानामेव विरेचनं भवति । मलदोषा दुष्टवातादिविकाराः ॥

श्यामात्रिवृद्दुरालम्भाहस्तिपिप्पलिवत्सकम्
नीलिनी कटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम् ॥
रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा

श्यामादिकं नीलिन्यादियुक्तं रसादीनामन्यतमेन रूक्षाणामपि शस्यते । अपिशब्दः पूर्वस्माद्विशेषः । सर्वदा सर्वर्तुषु ॥

त्र्यूषणं त्रिफलाहिङ्गु कार्षिकं त्रिवृतापलम्
सौवर्चलार्धकर्षं च पलार्धं चाम्लवेतसात् ॥
तच्चूर्णं शर्करातुल्यं मण्डेनाम्लेन वा पिबेत् ।
गुल्मपार्श्वार्तिनुत् सिद्धं जीर्णे चास्मिन्रसौदनम्

त्र्यूषणादिकं सिद्धं विरेकेण दृष्टफलं गुल्मपार्श्वार्तिनुत् भवति । त्र्यूषणत्रिफले समुदाये । अम्लवेतसस्यार्धपलम् । मण्डः स्वच्छा पेया । अम्लः काञ्जिकमद्यादिः । रसौदनो मांसरसामिश्र ओदनः ॥

त्रिवृतात्रिफलादन्तीसातलाव्योषसैन्धवैः
प्रकल्प्य चूर्णं सप्ताहं भाव्यमामलकाद्रसे ॥
तद्योज्यं तर्पणे यूषे पिशिते रागयुक्तिषु ।

त्रिवृतादिचूर्णं सप्तदिनान्यामलकरसेन भावितं तर्पणादिषु दोषाद्यपेक्षया योज्यम् । तर्पणाः सक्तवः । रागा बदरमण्डादयः ॥

तुल्याम्लं त्रिवृताकल्कसिद्धं गुल्महरं घृतम् ॥
श्यामात्रिवृत्कषायेण सिद्धं सर्पिः पयोऽपि वा

त्रिवृद्घृते यथालाभमम्लानि काञ्जिकादीनि पृथक् स्नेहसमानि । घृतं कल्कपादम् । श्यामात्रिवृतयोः कषाये घृतपाकः ।

कल्कं विना । केचित्तु सर्वकषायपाकेषु कषायौषधात् कल्कमपीच्छन्ति । पयोऽपि वा श्यामात्रिवृत्कषायसिद्धम् ॥

त्रिवृन्मुष्टींस्तु सनखानष्टौ द्रोणेऽम्भसः पचेत्
पादशेषं कषायं तं पूतं गुळतुलायुतम् ॥
स्निग्धे स्थाप्यं घटे क्षौद्रपिप्पलीफलचित्रकैः ।
लिप्ते मासे गते पीतं पाण्डुश्वयथुगुल्मजित् ॥

अष्टौ त्रिवृन्मुष्टीन् सनखानन्तर्नखान्यत्वाङ्गुलिनखा अपि मुष्टौ प्रविशन्ति । द्रोणोऽम्भसः सद्वादशानि पञ्चपलशतानि । पाकत्वाच्चतुर्भागः । क्षौद्रादिकेन स्निग्धघटालेपः ।

सुरा वा त्रिवृतापादकिण्वा तत्काथसंयुता ।

अथवैवंभूता सुरा पाड्वादिजित् । किंभूता त्रिवृतापादकिण्वा त्रिवृतापाद एव किण्वः यस्याः । सुरापादेन त्रिवृद्देयेत्यर्थः । किण्वः सुराकल्कः । तत्काथेन त्रिवृत्काथेन संयुता युक्ता ॥

यवैः श्यामात्रिवृत्काथस्विन्नैः कुल्माषमम्भसा ।
आसुतं षडहं पल्ले जातं सौवीरकं पिबेत् ॥

श्यामात्रिवृत्काथस्विन्नैर्यवैः कुल्माषमर्धस्विन्नमाषमम्भसा आसुतं षडहं पल्ले धान्यराशौ जातं सौवीरकत्वोत्पत्तौ पेयम् । एष सौवीरको निस्तुषैः क्रियते ॥

भृष्टानवासतुषानशुष्कान्यवांस्तच्चूर्णसंयुतान्
आसुतानम्भसा तद्वत् पिबेज्जातं तुषोदकम् ॥

भृष्टानित्यादिना सतुषेण कृतं तुषोदकं भवति । इति त्रिवृत्कल्पः ॥

ज्वरहृद्रोगवातासृग्गुदावर्तादिरोगिषु ।
राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतळः ॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्योमृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः

राजवृक्षोऽधिकं ज्वरादिषु पथ्यः । स च मृद्वादिगुणः । बालादिषु मृद्वनपायित्वाद्धेतोश्चतुरङ्गुलो विशेषाद्योज्यः । तौ सौरजातीयौ । कर्णिकारो राजवृक्षः प्रग्रहः कृतमालकः । आरोग्यशिम्बीशम्याको व्याधिघातोपघातकः । आरग्वधो दीर्घफलो घातश्च चतुरङ्गुलः । आरग्वधस्तथा चान्यो कर्णिकारेवतस्तथा ॥

फलकाले परिणतं फलं तस्य समाहरेत् ।
तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥
सप्तरात्रात्समुद्धृत्य शोषयेदातपे ततः ।
ततोमज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥
द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते ।
चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके ॥

तस्य सामान्येन राजवृक्षस्य फलकाले यदास्य फलानि भवन्ति तदा परिणतमतिक्रान्तपाकमेव फलमाहरेत् । न मध्यमम् । अकालेऽपि फलसंभवात् कालविशेषणम् । तेषामिति फलानाम् । गुणवतामिति दोषरहितानाम् । सप्तरात्रं सिकतासु वासनम् । तत आतपे शोषणम् । ततः शुष्काणां मज्जानमुद्धृत्य तं मज्जानं शुचौ निर्मले पात्रे निधापयेत् । द्राक्षेत्यादि सुबोधम् ॥

चतुरङ्गुलमज्ञो वा कषायं पाययेद्धिमम् ।
दधिमण्डसुरामण्डधात्रीफलरसैः पृथक् ॥
सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ।

चतुरङ्गुलमज्जकषायं हिमं शीतीभूतं दधिमण्डादीनामन्यतमेन युक्तं त्रिवृत्कल्केन युक्तं वा पाययेत् ॥

चतुरङ्गुलसिद्धाद्वा क्षीराद्यदुदियाद् घृतम् ॥
मज्जकल्केन धात्रीणां रसे तत्साधितं पिबेत् ।

चतुरङ्गुलसिद्धात् क्षीरात् प्रमथिताद्यत् घृतमुदियात् तत घृतं चतुरङ्गुलमज्जाकल्केन सहामलकरसेन साधितं पिबेत् ॥

तदेव दशमूलस्य कुलत्थानां यवस्य च ।
कषायेसाधितंसर्पिःकल्कैःश्यामादिभिःपिबेत् ॥

तदेव चतुरङ्गुलसिद्धक्षीरजं घृतं दशमूलाद्यन्यतमकषाये श्यामादिभिर्विरेचनद्रव्यकल्कैः सह साधितं पिबेत् ॥

दन्तीकषाये तन्मज्ञो गुळं जीर्णं च निक्षिपेत्
तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ॥

दन्त्याः क्वाथे चतुरङ्गुलमज्जानं जीर्णगुडं च निक्षिपेत् । तं मासं पक्षस्थितं वारिष्टं पिबेत् । इति चतुरङ्गुलकल्पः ॥

त्वचं तिल्वकमूलस्य त्यक्त्वाभ्यन्तरवल्कलम् ।
विशोष्य चूर्णयित्वा च द्वौ भागौ गाळयेत्ततः
लोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ।
कषाये दशमूलस्य तं भागं भावितं पुनः ॥
शुष्कचूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ।
मस्तुमूत्रसुरामण्डकोलधात्रीफलाम्बुभिः ॥

त्वचमित्यादिना तिल्वकस्योच्यते । लोध्रः शाबरकस्तिल्वस्तिल्वकस्तिलकस्तथा । रविद्रुः काण्डहीनश्च भिल्लीशम्बरपादपः । अभ्यन्तरवल्कलः अन्तर्भागस्त्यक्तो यया त्वचा तां त्वचं चूर्णयित्वा तस्य चूर्णस्य त्रीन् भागान् कुर्यात् ततो द्वौ भागौ लोध्रक्वाथेन स्रावयेत् । तेन शिष्टस्तृतीयो भागो भाव्यः । स एव पुनर्दशमूलकषायेण भाव्यः ततः शुष्कचूर्णं कृत्वा ततश्चूर्णात् पाणितलं कर्षं मस्त्वादीनामन्यतमेन पिबेत् । कोलैर्बदरैर्मृदितमम्बु तथोक्तम् । तद्वद्धात्रीफलाम्बु ॥

मेषशृङ्ग्यभयाकृष्णाचित्रकैः क्वथिते जले ।
मरुजाः सुनुयात्तच्च जातं सौवीरकं यदा ॥
भवेदञ्जलिना तस्य लोध्रकल्कं पिबेत्तदा ।

मरुजाभिर्मेषशृङ्ग्यादिक्वथितजलासुताभिः सौवीरकं कुर्यात् । मरुजा यवाः । तत् सौवीरकं यदाजातं भवेत् । तदा तस्याञ्जलिना पलचतुष्टयेन लोध्रकल्कं सामान्येनाक्षमात्रं पिबेत् ॥

सुरां लोध्रकषायेण जातां पक्षस्थितां पिबेत् ।
तिल्वकस्य कषायेण कल्केन च सशर्करः ॥
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ।

मरुजानां यवानां सुराविधानेन पक्षजातां सुरां पिबेत् ।तिल्वककषायकल्केन सह लेहः सुबोधः । इति तिल्वककल्पः ॥

सुधा भिनत्ति दोषाणां महान्तमपि संचयम् ।
आश्वेव कष्टविभ्रंशा नैव तां कल्पयेदतः ॥
मृदुकोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ।
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ॥
पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि ।

सुधा महान्तमपि दोषाणां संचयमाश्वेव भिनत्ति । कष्टविभ्रंशा तदसम्यग्योगेन कष्टा अपाया भवन्तीत्यर्थः । अतस्तां सुधां नैव कस्यचित् कल्पयेत् । किं सर्वत्रैव सा न कल्प्या नैवमपि तु मृदुकोष्ठादिष्वेव । क तर्हि सा कल्प्या । गुल्मादिषु ॥

सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ।
द्विवर्षा वा त्रिवर्षा वा शिशिरान्ते विशेषतः
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ।
बिल्वादीनां बृहत्योर्वा क्राथेन सममेकशः ॥
मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत् ।
पिबेत् कृत्वा तु गुलिकां मस्तुमूत्रसुरादिभिः॥

सा च सुधा तीक्ष्णैर्बहुभिश्च कण्टकैः समाचिता सती श्रेष्ठा । तां च सुधां शस्त्रेण पाटयित्वा क्षीरमुद्धारयेत् । नवामभिनवां पाटयेत् । अपि च द्विवर्षा वा त्रिवर्षा वा । विशेषेण शिशिरस्यान्ते क्षीरं गृह्णीयात् । स्नुहिः सुधा महावृक्षो गुडानिस्त्रिंशपत्रकः । समन्तदुग्धा गण्डीरो स्नुग्वज्री वज्रकण्टकः । ततोऽनन्तरं[१७] बिल्वादीनां महापञ्चमूलद्रव्याणां बृहत्योश्चैकशः प्रत्येकं कषायेण समपरिमाणेन सुधाक्षीरं मिश्रयित्वाङ्गारेषु शोषयेत् पचेदित्यर्थः । ततोऽङ्गारशोषणानन्तरं गुलिकां कृत्वा मस्त्वादीनामन्यतमेन पिबेत् ॥

त्रिवृतादीन्नव वरां स्वर्णक्षीरीं ससातलाम् ।
सप्ताहं स्नुक्पयःपीतान्रसेनाज्येन वा पिबेत् ॥
तद्वद्व्योषोत्तमाकुम्भनिकुम्भाग्नीन् गुळाम्बुना

त्रिवृतादीन्नव त्रिवृच्छ्यामाराजवृक्षारग्वधतिल्वकसुधाशङ्खिनीद्रवन्तीदन्त्याख्यान् । सातलायाः पृथग्युक्तिरपि निश्चिता । वरा त्रिफला । स्नुक्पयः पीतान् सुधाक्षीरभावितान् । व्योषादीन् तद्वदिति सप्ताहं स्नुक्पयः पीतान् ॥

अथाच्छ्यामात्रिवृत्क्वाथं स्नुक्क्षीरघृतफाणितैः
कासारिरसयूषाद्यैर्युक्तं वा स्नुक्पयः पिबेत्॥

श्यामात्रिवृत्क्वाथं स्नुहीक्षीरादिभिरद्यात् । कासारिरसादियुक्तं वा स्नुक्पयः पिबेत् ॥

निकुम्भकुम्भशम्याकशङ्खिनीसप्तलारजः
रात्रौ मूत्रे दिवाघर्मे सप्ताहं स्थापयेदिति ॥
स्नुक्क्षीरेऽपि ततस्तेन माल्यं वासोऽवचूर्णितम्
आजिघ्रन् प्रावृणानश्च मृदुकोष्ठो विरिच्यते॥

निकुम्भादीनां रजश्चूर्णं रात्रौ गोमूत्रे स्थापयेत् । दिवा च घर्मे आतपे शोषयन् स्थापयेत् । स्नुक्क्षीरेऽपि सप्ताहमातपे स्थापयेत् ततस्तेन चूर्णेन माल्यमवचूर्णितं आजिघ्रन् वासो वा प्रावृण्वानो मृदुकोष्ठो विरिच्यते । इति महावृक्षकल्पः ॥

नातिशुष्कंफलंग्राह्यंशङ्खिन्यानिस्तुषीकृतम्

सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी॥
श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ।

शङ्खिन्याः फलं विरेचनाय ग्राह्यम । तच्च निस्तुषीकृतम् । सप्तलायास्तु तथाविधमेव मूलम । ते च सप्तला शङ्खिन्यौ तीक्ष्णत्वगुणयुक्ते विकाषिण्यौ च । अत एव श्लेष्मामयादिषु कल्पयेत् । तीक्ष्णः क्षिप्रकारी । विकाषी विकषन् धातून सन्धिबन्धान् विमुञ्चति । यवतिक्ता शङ्खिनी च दृढपादा विसर्पिणी । नाकुली चाक्षपीडा च नेत्रमीला यशस्करी । सातला सप्तला सारी विदुला विमलाऽमला । बहुफेना चर्मकषा फेनादीप्ता मराळिका ॥

अक्षमात्रं तयोः पिण्डं मदिरालवणान्वितम् ॥
हृद्रोगे वातकफजे तद्वद्गुल्मेऽपि योजयेत्
शङ्खिनीचूर्णभागौ द्वौ तिलकल्कस्य चापरः
हरीतकीकषायेण तत्तैलं पीडितं पिबेत्
अतसीसर्षपैरण्डकरञ्जेष्वप्ययं विधिः ॥

अक्षमात्रमित्यादि सुबोधम् । तिलानां भाग एकस्तत्समाभ्यां शङ्खिनीचूर्णभागाभ्यां सहावपीडयेत् । तत्तैलं हरीतकीक्वाथेन पिबेत् । तिलवत् भागकल्पनयाऽतस्यादीनामपि पृथक् पीडितानां तैलस्य हरीतकीकषायेण पानविधिः । इति सप्तलाशङ्खिन्योः कल्पः ।।

दन्तिदन्तस्थिरस्थूलं मूलं दन्तीद्रवन्तिजम् ।
आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाषि च
गुरुप्रकोपिवातस्य पित्तश्लेष्मविलायनम् ।
तत्क्षौद्रपिप्पलीलिप्तं स्वेदयेन्मृत्कुशान्तरे ॥
शोषयेच्चातपेऽग्न्यर्कौ हतो ह्यस्य विकाषिताम्

दन्तीद्रवन्तिजं मूलं दन्तिदन्तवत् करिदन्तवत् स्थिरं स्थूलं चाताम्रश्यावं तीक्ष्णत्वादिगुणं भवति । सुबोधम् । दन्ती शीघ्रा निकुम्भा स्यादुपाचित्रा मुकूलकः । तथोदुम्बरपर्णी च विशल्या च गुणप्रिया । द्रवन्ती शम्बरी चित्रा न्यग्रोधा मूषिकाह्वया । प्रत्यक्श्रेणी विषारण्डापुत्रश्रेण्याखुपर्णिका । तद्दन्तीद्रवन्त्योर्मूलं माक्षिकपिप्पलीभ्यां लिप्तं कुशादिभिः पश्चाच्च मृदा वेष्टयित्वा पुटपाकवत् स्वेदयेत् । स्विन्नं चातपे शोषयेत् । यस्मात्तस्य विकाषितां धातुकषणस्वरूपत्वमग्न्यर्कौ नाशयतः ॥

तत् पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ।
अभिष्यण्णतनुर्गुल्मी प्रमेही जठरी गरी ॥
गोमृगाजरसैः पाण्डुः क्रिमिकोष्ठी भगन्दरी ।

तन्मूलं मस्त्वादिभिरभिष्यण्णतनुत्वादिमान् पिबेत् । अभिष्यण्णान्तः क्लिन्ना तनुर्यस्य स तथोक्तः । तदेव मूलं पाण्ड्वादियुक्तः गोमांसरसादिना पिबेत् ॥

सिद्धं तत् क्वाथकल्काभ्यां दशमूलरसेन च ।
विसर्पविद्रध्यलजीकक्ष्यादाहान् जयेत् घृतम्॥
तैलं तु गुल्ममेहार्शोविबन्धकफमारुतान् ।
महास्नेहः शकृच्छुक्रवातसङ्गानिलव्यथाः ॥

तदिति दन्त्या द्रवन्त्याश्च मूलस्य परिग्रहः । दशमूलस्य क्वाथेन च दन्तीद्रवन्तीमूलकल्कं दत्वा यत् घृतं सिद्धं तद्विसर्पा-

दीन् जयेत् । अलजी प्रमेहोक्ता पिटका । कक्ष्या नाम ग्रन्थिरुत्तरे वक्ष्यते । अनेनैव विधिना तैलं पक्वं गुल्मादीन् जयेत् । अनेनैव विधिना महास्नेहः स्नेहचतुष्टयं पक्वं शकृत्सङ्गादीन् जयेत् ॥

दन्त्या रसेऽजशृङ्ग्याश्च गुळक्षौद्रघृतान्वितः ।
लेहः सिद्धो विरेकार्थे दाहसंतापमेहनुत् ॥
वाततर्षे ज्वरे पैत्ते स्यात्स एवाजगन्धया ।

दन्त्या मूलस्य परिग्रहः । दन्तीशृङ्ग्योः काथे गुळादिकं दत्वा लेहः सिद्धो विरेकार्थे दाहादिनुच्च भवति । स एव दन्तीलेहोऽजगन्धया संयुक्तो वाततर्षे पैत्ते च ज्वरे स्यात् सिद्ध इति संबध्यते ॥

दन्तीद्रवन्त्योर्मूलानि पचेद्धात्रीरसे ततः ॥
त्रीनंशान् फाणितात् द्वौ च भृष्टस्तैले घृतेऽथवा
श्यामादिकल्कयुक्तोऽयं लेहः सिद्धं विरेचनम्
पथ्याक्षदशमूलानां तद्वल्लेहाः पृथग्रसैः ।

धात्र्या आमलकस्य रसे सिद्धयोर्युगपद्दन्तीद्रवन्तीमूलयोस्त्रीनंशान् समास्त्रयो भागाः द्वौ भागौ फाणितस्य क्षुद्रगुडस्येत्येकतः पञ्चकं दोषाद्यपेक्षया तैलेन वा घृतेन वा भृष्टमुभयथापि श्यामादिगणकल्केन संयोज्य लेहो विरेचनं सिद्धं । धात्रीफलरसवचनेनैवंप्रकारेण पृथक् हरीतक्यादीनामपि रसैर्लेहा भवन्ति ॥

तयोर्बिल्वसमं चूर्णं तद्रसेनैव भावितम् ॥
विबद्धविशि वातोत्थे गुल्मे चाम्लयुतं हितम् ।
मुद्गादिसिद्धैस्तन्मूलैर्यूषादींश्च प्रकल्पयेत् ॥

तयोर्दन्तीद्रवन्तीमूलयोश्चूर्णं समेन विडलवणेन युक्तं पश्चाच्च तन्मूलकाथेनैव भावितमम्लैः काञ्जिकमद्यादिभिर्युक्तं विड्विबन्धे वातगुल्मे च हितम् । मुद्गादिसिद्धैरिति सुबोधम् । एकेनादिग्रहणेन धान्यानां ग्रहणम् । द्वितीयेनान्नं प्रकरणात् ॥

दन्तीद्रवन्तीमरिचस्वर्णक्षीरीयवाषकम् ।
सशुण्ठ्यग्निकपृथ्वीकं चूर्णितं सप्त वासरान् ॥
मूत्रभावितमाज्येन पिबेज्जीर्णे च तर्पणम् ।
सर्वदा सर्वरोगेषु बाले वृद्धे च तद्धितम् ॥
दुर्भुक्ताजीर्णपार्श्वार्तिगुल्मप्लीहोदरेषु च ।
गण्डमालासु वाते च पाण्डुरोगे च शस्यते ॥

दन्त्यादिकं चूर्णितं सप्तरात्रं च येन केनचिन्मूत्रेण भावितं घृतेन पिबेत् । तस्मिन् जीर्णे तर्पणं सक्तुमण्डं पिबेत् । एतच्च सर्वकालं सर्वरोगेषु बालवृद्धयोश्च दुर्भुक्ताजीर्णादिषु च गण्डमालादिके च शस्यते ॥

गुळस्याष्टपले पथ्या विंशतिः स्यात् पलं पलम्
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥
प्रकल्प्य मोदकानेकं दशमे दशमेऽहनि ।
उष्णाम्भोऽनुपिबन् खादेत्तान् सर्वान् विधि-
(नामुना
एते निष्परिहाराः स्युः सर्वव्याधिनिबर्हणाः ।
विशेषाद्ग्रहणीपाण्डुकण्डूकोठार्शसां हिताः ॥
विरेचने मुख्यतमा नवैते त्रिवृतादयः ।

गुळादिकेन मोदकान् दश प्रकल्प्य दशमे दशमेऽहन्येकमेकं मोदकमुष्णाम्भोऽनुपिबन् खादेदेवं सर्वान् । सुबोधम् । एते नव त्रिवृदादयो विरेचने मुख्यतमाः ॥

हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥
विशेषात् ग्रहणीशोफपाण्डुमेहोदरापहाम् ।
पिबेत् पथ्यां ससिन्धूत्थविळङ्गोषणनागराम्॥
मूत्रेण वत्सकादेर्वा निर्यूहेण हरीतकीम् ।
पथ्यानागरचूर्णं वा संयुतं नीलिनीफलैः ॥
गुळेन भक्षयेत्तोयं कवोष्णं च पिबेदनु ।

त्रिवृत्कल्पनाभिर्हरीतकीं कल्पयेत् । यां पुनः पथ्यां हरीतकीं ग्रहण्यादिनाशनस्वरूपां विशेषात् पिबेत् । विशेषणमेव हेतुतां प्राप्तम् । न तु सिन्धूत्थादियुक्तां हरीतकीं मूत्रेण वा वत्सकादिनिर्यूहेण वा पिबेत् । पथ्यानागरयोश्चूर्णं नीलिनीफलचूर्णेन युक्तं गुळेन सह भक्षयेत् पश्चात् कोष्णं तोयं पिबेत् ॥

पथ्यात्रिवृद्भ्यांगुलिकाःकार्याद्राक्षारसाप्लुता
माषप्रमाणास्ताः शुष्का लिह्याद्यक्ष्मी घृतप्लुताः
पथ्यात्रिवृत्पटूष्णाम्बु सर्वत्रेष्टं विरेचनम् ।

हरीतकीत्रिवृतोश्चूर्णेन द्राक्षारसालुळितेन गुळिकाः कार्याः । माषप्रमाणास्ताः शुष्काः प्रयोगकालेऽवचूर्ण्य घृतेन लिह्याद्राजयक्ष्मी । पथ्यादिकं सर्वत्र काले विषये हितम् ॥

स्नुक्क्षीरभाविते पथ्याचूर्णे कुर्वीत मोदकान्
कोलास्थिमात्रान शुष्कांश्च नवनीतेन लेहयेत्
गुल्मोदरयकृत्प्लीहशूलानाहविबन्धिनः ॥

हरीतकीचूर्णेन सुधाक्षीरालुळितेन बदरास्थिप्रमाणां गुळिकां कृत्वा शुष्काः प्रयोगकाले नवनीतयुक्ताः वैद्यो लेहयेत् । इति हरीतकीकल्पः ॥

लिह्यादेरण्डतैलेन कुष्ठं त्रिकटुकान्वितम् ।
सुखोदकं चानुपिबेत्सुखमेतद्विरेचनम् ॥

त्रिकटुकयुक्तं कुष्ठमेरण्डतैलेन लीढं सुखोदकानुपानं सुखविरेचनम् । अमीषां विरेचनानां कोष्ठपरायत्तत्वेन कार्यकर्तृत्वमुच्यते ॥

अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ।
कुर्यात् संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥

अल्पस्यापीत्यादि । अल्पस्यापि मात्रया बहुकार्यकर्तृत्वं कुर्यात् । प्रभूतस्यापि मात्रयाऽल्पकर्मतां कुर्यात् । कथमेतत् कर्तुं पार्यत इत्याह । संश्लेषेत्यादि । अल्पमपि तीक्ष्णेन संसृष्टं महार्थत्वं याति । तथा प्रभूतमपि तीक्ष्णेन विश्लेषितमल्पकर्मतां याति । कालादिभिरप्यल्पं महाकार्यकरं भवति । बहु च स्वल्पकर्मकरम् । संस्कारं तद्योग्येन गुणान्तरोत्पादनम् । युक्तिर्विशिष्टैः क्रमादिभियोजनम् ॥

त्वक्केसराम्रातकडाडिमैला-
सितोपलामाक्षिकमातुलुङ्गैः ।
मद्येन तैस्तैश्च मनोऽनुकूलै-
र्युक्तानि देयानि विरेचनानि ॥

इति कल्पस्थाने द्वितीयोऽध्यायः ॥

एतानि विरेचनानि त्वगादिभिर्युक्तानि देयानि । तैस्तैश्च प्रतिपुरुषं मनोनुकूलैः प्रियैर्वस्तुभिर्युक्तानि । यतः प्रियत्वात् पथ्यादियोगाय जायत इति ॥

इतीन्दुविरचितायमष्टाङ्गसंग्रहव्याख्यायां कल्पस्थाने द्वितीयोऽध्यायः ॥

---

# तृतीयोऽध्यायः ।

---

वमनविरेचनानां कल्पनमुक्त्वा तेषामेवासम्यग्योगेन या व्यापदस्तासां सिद्धिं प्रतीकारं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो वमनविरेचनव्यापत्सिद्धिं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

अध्यायक्रमेण वमनं पूर्वमुच्यते ॥

अतिक्षुधितेनातिमृदुकोष्ठेनाल्पश्लेष्मणा दुर्वमेन हीनमात्रमतिमात्रं तीक्ष्णमतिशीतमजीर्णे वा पीतं वमनमधो गच्छति । तत्रेप्सितानवाप्तिर्दोषोत्क्लेशश्च । तं पुनराशु स्नेहयित्वा यौगिकैर्मात्राकालाद्यपेक्षं वामयेत् । व्यापत्कराणि च पूर्वोक्तमतिक्रमं स्मरन् परिहरेत् ॥

अतिक्षुधितत्वादियुक्तेन पीतं वमनमधो गच्छति । नैव वामयतीत्यर्थः । येनैव वा हीनमात्रत्वादियुक्तं पीतमधो गच्छति । तत्राधोगते वमन ईप्सितस्य छर्दितरोगोपशमनस्यानवाप्तिर्दोषोत्क्लेशश्च तं पुनर्वामयेत् । व्यापत्कराणि च परिहरेत् ॥

अजीर्णिनः श्लेष्मवतोऽत्युष्णतीक्ष्णलवणमतिमात्रमहृद्यं वा विरेचनमन्यद्वा भेषजमूर्ध्वं प्रवर्तते । तत्र पूर्वोक्ता व्यापत्साधनं च । तत ऊर्ध्वमप्युत्तिष्ठति हृद्यलेहवटकवर्ज्यमौषधं न तृतीयमवचारयेत् ॥

अजीर्णिनस्तथा बहुश्लेष्मणो विरेचनमूर्ध्वं व्रजति । मुखेन गच्छति । अतितीक्ष्णमत्युष्णमतिलवणमहृद्यमतिप्रभूतं च पीतमूर्ध्वं गच्छति । तत्र तस्मिन्नूर्ध्वं व्रजति पूर्वोदिता व्यापत् तथैव सिद्धिः पूर्वोदितमेव साधनम् । पुनःस्निग्धस्य पूर्वस्यातिक्रमञ्च स्मरतो व्यापत्कारणं परिहरत औषधयोजनम् । तत इति पुनर्युक्ते विरेचन ऊर्ध्वमुत्तिष्ठति मुखेन गच्छति तृतीयं विरेचनं नावचारयेत् हृद्यादिगुणमौषधं वर्जयित्वा । तथाविधं हि तृतीयमप्यवचारयेदित्यर्थः ॥

क्रूरकोष्ठस्यातितीक्ष्णाग्नेरल्पमल्पवीर्यं वा भेषजमूर्ध्वभागिकमधोभागिकं वा भक्तवदुपैति पाकम् । तत्र समुदीर्णा दोषा यथाकालमनिर्ह्रियमाणा विभ्रमं कुर्वन्ति । तं स्निग्धकोष्ठमनल्पममन्दं चौषधं पाययेत् ॥

क्रूरकोष्ठत्वादियुक्तस्याल्पशक्ति वा वमनं विरेचनमप्यकृत्वैवेष्टं कार्यं भक्तवत् पा-

कमुपैति । पाकेन चौषधस्य संचिता दोषा अनिर्ह्रियमाणा विभ्रमं कुर्वन्ति । यस्मादपकं वमनं दोषान् पच्यमानं विरेचनं निर्हरेन्न तु तत् पक्वमिति । तं पक्वौषधं स्निग्धकोष्ठं कृत्वाबहुतीक्ष्णं चौषधं पाययेत् ॥

कषायमल्पमत्यग्रं रूक्षं वा भेषजमस्निग्धस्विन्नेन वा पीतं शीतोपचारेण वा स्तब्धं दोषविग्रथितमयोगी भवति । तत्र वमने भूयो वामयेत् । विरेचने स्निग्धस्विन्नं पुनर्विरेचयेत् । उत्क्लिष्टभूरिदोषं वा तृतीयेऽहनि । उभयोश्च संशोधनयोर्लवणतैलाभ्यक्तं पिण्डप्रस्तराभ्यां स्वेदयेत् ॥

कषायादिगुणं वा भेषजमस्निग्धादिकेन वा पीतं स्वयं स्तब्धत्वात् दोषावष्टब्धत्वाच्चायोगाय संपद्यते । कषायं कषायरसप्रायम् । अप्रत्यग्रमसंपन्नम् । तत्रैवमयोगीभूते वमने पुनर्वामयेत् । विरेचने पुनर्विरेचयेत् । उभयोरपि वमनविरेचनयोरेवमयोगीभूतयोस्तैलाभ्यक्तस्य सूत्रोदिताभ्यां पिण्डप्रस्तराभ्यां स्वेदं विदध्यात् ॥

स्निग्धस्विन्नस्य च वमनमकृत्वा विरेचनं पीतवतः सामस्य वा मृदु वा विरिक्तस्याधोभागेत्यर्थगुरुस्तब्धोदरता शूलो वातमूत्रपुरीषसङ्गश्च भवति । तमप्ययोगिनं समूत्रैस्तीक्ष्णैरास्थाप्य जाङ्गलरसैश्च भोजयित्वा फलदारुपिप्पलीसिद्धेन तैलेनानुवास्य वातहरैश्च स्नेहैरुपस्नेह्य पुनस्तीक्ष्णैर्विरेचयेत् ॥

स्निग्धस्विन्नस्य वमनमकृत्वैव विरेचने उपयुक्ते सामे वोपयुक्ते मृद्वौषधे वोपयुक्ते तत्र विरिक्तस्य सतोऽधोभागेऽत्यर्थं गुरुत्वादिकं भवति । तस्मिन्नयोगिनि समूत्रैस्तीक्ष्णैरास्थापनादिका चिकित्सा । सुबोधम् ॥

कफोल्बणस्यातिस्निग्धस्य गुरुकोष्ठस्य मन्दाग्नेर्वा मृदुप्रणीतमौषधं भृशमुत्क्लेश्य दोषान् जाड्यतन्द्रादौर्बल्याङ्गसादान् जनयति । तच्छीघ्रमुल्लिखेत् । लङ्घनेन च संधुक्षिताग्निं पुनःस्निग्धं तीक्ष्णोष्णैर्विशोधयेत् ॥

कफोल्बणत्वादियुक्तस्य मृदु शोधनमौषधं दोषानुत्क्लेश्य जाड्यतन्द्रादीन् जनयति । तत्र च पीतमौषधमङ्गुल्यादिभिः क्षिप्रमुल्लिखेदुद्वमेत् । ततो लङ्घनेन संधुक्षिताग्निं पुनः स्निग्धं तीक्ष्णादिभिः शोधयेत् ॥

सशेषान्नाय वातश्लेष्मवते रूक्षाय सोदावर्ताय मन्दाग्नये वा शीतं रूक्षं वा दत्तमौषधं भृशमाध्मानं करोति । तत्र मलसङ्गात् समुन्नह्यत्युदरमन्तःशूलं दृतिवत् पार्श्वयोरापूर्णता शिरःपृष्ठरुजा श्वासकासौ पायुवस्तिनिस्तोदश्च भवति । तमुदावर्तानाहहराभ्यङ्गस्वेदवर्तिदीपनचूर्णवस्तिक्रियाभिरुपचरेत् ॥

सशेषान्नादिमते वा शोधनार्थं शीतं रूक्षं वा दत्तं भृशमाध्मानं करोति । तत्र च मलसङ्गाद्धेतोरुदरे समुन्नद्धतादिकं भवति । सशेषान्नोऽजर्णी । उदावर्त अर्शोनिदान उ-

क्तः । समुन्नाहः सर्वतोवन्धः । सुबोधम । निस्तोद इव निस्तोदः । तथाविधमुदावर्तह-रादिभिरुपचरेत् ॥

क्षामेणाल्पबलेन मृदुकोष्ठाग्निना रूक्षेणास्निग्धेन वा स्विन्नेन सामेन वा बलवदौषधमुपयुक्तं सपित्तमनिलं प्रदूष्य परिकर्तिकामापादयति । तत्र नाभिवस्तिगुदमेढ्रे सदाहपरिकर्तनमनिलसङ्गो विष्टम्भश्च ॥

क्षामत्वादियुक्तेन यत्तीक्ष्णादियुक्तमौषधमुपयुक्तं तत् सपित्तमनिलं प्रदूष्य परिकर्तिकामापादयति । समन्ताच्छेदनमिव जठरे परिकर्तिका । सुबोधम् ॥

तं कृष्णतिलमधुकमधुयुक्तैः पिच्छावस्तिभिरास्थापयेत् । क्षीरिवृक्षशृतक्षीरेण वा । शीताम्बुपरिषिक्तं चैनं पयसा भुक्तवन्तं घृतमण्डेन यष्टीमधुकतैलेन वानुवासयेत् । क्षामस्य च मधुरो बृंहणश्च सर्वो विधिरिष्टः॥

तमिति परिकर्तिकावन्तं कृष्णतिलादियुक्तैर्वक्ष्यमाणैः पिच्छावस्तिभिरास्थापयेत् । वटादिभिः क्षीरिवृक्षैः शृतेन क्षीरेण वास्थापयेत् । शीताम्बुपरिषेकादियुक्तस्यानुवासनं घृतमण्डेन वा यष्टीमधुकतैलेन वा । सर्वश्च क्षामस्य मधुरबृंहणादिको विधिरिष्टः ॥

सामे लङ्घनदीपनं च लघुरूक्षोष्णं चान्नपानम् । निरामीभूतेऽनुबन्धे लघु क्षाराम्लम् । सवाते दधिसाराम्लं डाडिमत्वचा युक्तं भोजने पाने च प्रयुञ्जीत । सडाडिमरसं च सर्पिः पिबेदुष्णाम्बुना वा तिलदेवदारुकल्कम् ॥

सामे शोधनासम्यग्योगिनि लङ्घनादिकम् । निरामीभुते पुरुषे दोषानुबन्धे लघ्वादिकमाहारम् । सवातेऽतियोगिनि दध्यादिकम । अम्लं काञ्चिकादि । तिलदेवदारुणोः कल्केन सडाडिमरसं सर्पिः पिबेत ॥

क्रूरकोष्ठस्य बहुदोषस्याल्पमल्पगुणं मृदुस्निग्धं वा शोधनमवचारितमुत्क्लेश्य दोषान् न निर्हरति । अल्पाल्पं च पित्तकफसंसृष्टं परिस्रवति । विष्टम्भगौरवशोफकण्डूपाण्डुताङ्गसादगुल्मशूलानि चापादयति ॥

क्रूरकोष्ठत्वादियुक्तस्य वाल्पादिगुणं वा शोधनमवचारितं दोषानुत्क्लेश्य न निर्हरति । तच्चौषधं पित्तकफाभ्यां संसृष्टमल्पाल्पं कृत्वा संस्रवति । विष्टम्भादीनि चोत्पादयति ॥

तं तिनिशधवाश्वकर्णपलाशबलानिर्यूहैर्मधुयुक्तैरास्थापयेत् । उपशान्तपरिस्रवं च पुनरुपस्निग्धं तीक्ष्णैः शोधयेत् । शुद्धे च दीपनांश्चूर्णासवारिष्टादीन् योजयेत् ॥

तं परिस्राविणं तिनिशादीनां निर्यूहैर्माक्षिकयुक्तैरास्थापयेत् । तिनिशः स्पन्दनः । अश्वकर्णः सालः । तैरास्थापनैः परिस्रव उपशान्ते पुनः किञ्चित्स्निग्धं शोधयेत् । शुद्धे च दीपनांश्चूर्णादीन् योजयेत् ॥

पीतौषधो यदा वेगमुदीरयति नि-

गृह्णाति वा । तदा प्रवाहिकास्य जायते । तस्यां सदाहशूलं सपिच्छं श्वेतं कृष्णं रक्तं वा भृशं प्रवाहमाणः कफमुपविशति । तं परिस्रवविधिनोपचरेत् ॥

पीतविरेचनौषधस्य वेगोदीरणधारणाभ्याम् । अस्येति पुंसः प्रवाहिका जायते । तस्यां प्रवाहिकायां सदाहादिकं प्रवाहमाणो मलमनुलेपयत् कफ नोपविशति । तमेवंविधं प्रवाहिकावन्तमनन्तरोक्तेनास्थापनादिना परिस्रवविधिनोपचरेत् ।

पीतौषधस्य भेषजोद्गारच्छर्द्यादीनां निग्रहाद्वातादयः कुपिता हृदयमुपसृत्य हृद्ग्रहं घोरमावहन्ति । ततः प्रधानमर्मोपतापाद्वेदनाभिरत्यर्थमातुरः पीड्यते । मोहहिध्माकासलालापार्श्वशूलयुतो वेपथुमान् नष्टसंज्ञो दन्तान् कटकटापयत्युद्वृत्ताक्षो जिह्वां खादति । तं हृदयोपसरणमाहुः ॥

पीतौषधस्य भेषजोद्गारादिनिरोधात् सर्वे दोषाः कुपिता हृदयं प्राप्य हृद्ग्रहं कुर्वन्ति । ततश्च प्रधानमर्मणो हृदयस्योपतापान्नानाविधाभिर्वेदनाभी रुजाभिः पीड्यते । मोहादिमांश्च नष्टसंज्ञत्वादियुक्तो भवति । तं हृद्ग्रहमाचार्या हृदयोपसरणमित्याहुः ॥

तस्मै भिषक् शीघ्रमसुद्यन्नभ्यङ्गपूर्वं धान्यस्वेदेन परिस्वेद्य तीक्ष्णमवपीडं दद्यात् । यष्टीमधुकमिश्रेण तण्डुलाम्बुना वमनम् । कटुभिर्वा कफोत्तराय । ततो दोषशेषं पाचनीयैः पाचयेद्यथादोषोच्छ्रयं च वस्तीन् वितरेत् ॥

तस्मै हृदयोपसरणिने भिषगमुह्यन् मोहमप्राप्नुवन्नभ्यङ्गपूर्वं धान्यस्वेदेन संस्वेद्य तीक्ष्णमवपीडं कल्कनस्यं दद्यात् । यष्ट्यादिभिस्तण्डुलाम्बुना वमनम् । श्लेष्माधिकाय कटुभिर्वमनौषधैर्वमनम् । ततोऽस्य दोषशेषं पाचनीयौषधैः पाचयेत् । पक्वदोषस्य च य एव दोषोऽधिकस्तदनुगुणानेव वस्तीन् वितरेदाख्यास्यमानान् ॥

अस्निग्धस्विन्नेनाब्रह्मचारिणा वेगधारिणा मृदुकोष्ठेन सुकुमारेण वा रूक्षमौषधमतिमात्रं प्रयुक्तमतिविरेकाद्वायुं कोपयति । तेन सर्वाङ्गग्रहो भवति । तस्य विशेषात् पार्श्वपृष्ठश्रोणिमन्यामर्मसु शूलमूर्छाभ्रमकम्पस्तम्भो निस्तोदो भेद उद्वेष्टनं संज्ञानाशश्च स्यात् । तमभ्यज्य धान्यैः स्वेदयित्वा यष्टीमधुकविपक्वेन तैलेनानुवासयेत् । वातहरं चान्नपानम् ॥

अस्निग्धादिके रूक्षमतिमात्रमौषधं प्रयुक्तमतिमात्रत्वादतिविरेकेण वायुं प्रकोपयति । तेन वायुकोपेन सर्वाङ्गग्रहणादिकं स्यात् । तमातुरमभ्यङ्गादिभिश्चिकित्सेत् ॥

स्निग्धस्विन्नस्यातिमृदुकोष्ठस्य क्षुधितस्य वा तीक्ष्णमतिभूरि वा प्रयुक्तमौषधं सर्वशो निर्हृत्य मलान् धातूनपि द्रवीकृत्य विस्रावयेदतियोगेन । तं शतधौतघृतेनाभ्यज्य कषायस्वादुशीतैः प्रदेहपरिषेकाव-

गाहान्नपानैः शर्करामधुमद्भिश्च लेहैः स्तम्भयेत् ॥

स्निग्धत्वादियुक्तस्य तीक्ष्णातिमात्रयोगेन धातूनपि स्रावयति । तमतियोगिनं शतधौतेनेनाभ्यज्य कषायादिना विशेषतः स्तम्भयेत् । कषायादिकं प्रदेहादिविशेषणम् । शर्करादिकं लेहानाम् ॥

चन्दनाञ्जनोशीरच्छागासृक्शीतोदकैर्लाजसक्तून् पाययेत् । पिच्छावस्तींश्चास्मै दद्यान्मधुरवर्गसिद्धं च क्षीरसर्पिः सर्पिर्मण्डोऽनुवासनम् । रक्तपित्तविधानं च कुर्यात् ॥

तं च चन्दनादिभिर्लाजसक्तून् पाययेत् । अस्मै चातियोगिने पिच्छावस्तिन दद्यात् । क्षीरोद्भवं घृतादिकं मधुरवर्गसिद्धमनुवासनम् । तथा यत्किञ्चिद्रक्तपित्तघ्नं तदपि कुर्यादिति सामान्येन साधनान्यतियोगे ॥

विशेषेण वमनातियोगे सघृतसिताक्षौद्रं फलरसैर्मन्थं पिबेत् । क्षीरिवृक्षशुङ्गसिद्धां वा समाक्षिकां पेयां क्षीरं वा संग्राहिद्रव्यसिद्धं च क्षीरं भोजनेऽवचारयेत् ॥

सघृतादिमन्थादिकं वमनातियोगे विशेषेण फलानां द्राक्षादीनां रसैः । सुबोधम् । क्षीरिवृक्षा वटादयः । तेषां शुङ्गाः प्रवाळानि । क्षीरं वा वटशुङ्गसिद्धम् । भोजने च संग्राहिद्रव्यसिद्धं क्षीरम् ॥

सोद्गारायां च छर्द्यां धनिकामधूकमधुरसमुस्ताञ्जनानि मधुना लिह्यात् । वाक्सङ्गे हनुसङ्गेऽनिलार्तौ च घृतमांसरससिद्धामल्पतण्डुलां पेयां पिबेत् ; स्नेहस्वेदौ चावचारयेत् ॥

सोद्गारायां छर्द्यां धनिकादीनि मधुना लिह्यात् । धनिका आर्द्रिका । मधुरसा मूर्वा । अञ्जनं स्रोतोजसौवीरभेदेन द्विविधम् । अतियोगेन वाक्सङ्गादिषु घृतादिसिद्धां पेयां पिबेत् । स्नेहस्वेदौ च यथाविषयं कुर्यात् ॥

जिह्वाप्रवेशे स्निग्धाम्ललवणान् कवळगण्डूषान् हृद्यांश्चाजमांसरसान् । पुरतश्चास्य फलान्यम्लानि खादयेत् ॥

जिह्वाप्रवेशे स्निग्धादिगुणान् कवळगण्डूषान् कुर्यात् । असंचार्य औषधेन मुखे चूर्णे गण्डूषः । संचार्यो मुखैकदेशधार्यः कवळः । अस्यान्तःप्रविष्टजिह्वस्य पुरतोऽग्रतोऽन्यं पुरुषमम्लानि फलानि खादयेद्वैद्यः । तद्दर्शनेन मुखे द्रवीभूते जिह्वा स्वरूपे भवति ॥

निर्गतां तु जिह्वां तिलद्राक्षाकल्कलिप्तां व्योषलवणचूर्णप्रघृष्टां वा प्रवेशयेत् । अक्षिणी व्यावृत्ते घृताभ्यक्ते पीडयेद्विसंज्ञे सामवेणुगीतशब्दान् श्रावयेत् ॥

यदा पुनरतियोगेन जिह्वा निर्गता भवति तदा तां तिलद्राक्षाकल्केन लिप्तां व्योषादिचूर्णेन प्रघृष्टां वा प्रवेशयेत् । अक्षि-

णीति अतियोगेन व्यावृत्ते अभ्यज्य पीडयेत् । विगतचेतनं सामादिशब्दान् श्रावयेदिति वमनातियोगे ॥

विरेचनातियोगे तण्डुलाम्भसा मधुमिश्रेण वमेत् । प्रियङ्ग्वादिं च तण्डुलोदकेन पिबेद्रोध्ररसाञ्जनदाडिमत्वचो वा । सोमवल्ककट्फलोत्पलसमङ्गापद्मकेसराणि वा । क्षौद्रशर्करामधुकौदुम्बरत्वचो वा । रक्तातिसारक्रियां च कुर्वीत ॥

विरेचनातियोगे पुनर्माक्षिकामिश्रं तण्डुलाम्बु पीत्वाऽङ्गुल्यादिना वमेत् । तथा हि वायुः सर्वाभिमुखो भवति । प्रियङ्ग्वादिगणं तण्डुलोदकेन लोध्रादिकं वा तण्डुलोदकेन । कट्फलादिकं वा तण्डुलोदकेन । कट्फलः सोमवल्कः । समङ्गा मञ्जिष्ठा । क्षौद्रादीनि वा तण्डुलोदकेन । सर्वं च यथाविषयं रक्तातिसारचिकित्सितं कुर्वीत ॥

गुदं निःसृतमभ्यज्य स्वेदयित्वा कषायैश्च स्तम्भयित्वा प्रवेशयेत् । पूर्ववच्च वाक्सङ्गादीन् साधयेत् ॥

विरेचनातियोगे गुदं निःसृतं स्निग्धस्विन्नं कृत्वा कषायैर्द्रव्यैः स्तम्भयित्वा परित्याजितशैथिल्यं कृत्वा यत्नेन प्रवेशयेत् । वाक्सङ्गादीन् पूर्ववद्वमनातियोगवत् साधयेच्चिकित्सेत् ॥

उभयत्र च जीवरक्तपित्तयोर्ज्ञानार्थं रक्ते शुक्लं पिचु क्षौमं वा क्षिपेत् । तस्मिन्नावाने कोष्णाम्बुक्षालितशुद्धे जीवरक्तम् । विवर्णे तु रक्तपित्तं विद्यात् । अन्नं वा तद्विमिश्रं शुने काकाय वा दद्यात् । तस्मिन् भुक्ते जीवं वदेदभुक्ते पित्तम् ॥

उभयत्र वमनातियोगे विरेचनातियोगे च रक्तप्रवृत्तौ रक्तपित्तभ्रान्तिनिरासायेदमिदं कुर्यात् । प्रवृत्ते रक्ते शुक्लं पिचु, कार्पासतूलकं, क्षौमं वा वस्त्रखण्डं शुक्लं क्षिपेत् । तं च रक्तादुद्धृत्यावानं शुष्कं कृत्वा कोष्णाम्बुना प्रक्षाळयेत् । प्रक्षाळितं तद्यदा पूर्ववच्छुक्लं भवति तदा जीवरक्तमित्यध्यवस्येत् । विवर्णे तु रक्तपित्तमिति । अथवा तेन रक्तेन मिश्रमन्नं शुने दद्यात् काकाय वा । तस्मिंस्तु भुक्ते जीवं वदेदभुक्ते पित्तम ॥

आमरणाच्च तस्य तृण्मूर्छामदार्तस्य क्रियां पित्तघ्नीमतियोगोक्तां च कुर्यात् । एणादिरुधिरं वातिस्रुतरक्तोक्तविधिना सक्षौद्रं शीघ्रमुपयुञ्जीत । तद्धि सद्यो जीवमभिसंदधाति । श्यामाकाश्मर्यमधुकदूर्वोशीरैर्वा श्रृतं पयो घृतमण्डाञ्जनयुक्तं शीतं वस्तौ निषेचयेत् ॥

प्रवृत्तजीवोऽपि जीवति चेदवश्यं तस्य आमरणात् पित्तघ्न्यादिकां क्रियां कुर्यात् । न तूपेक्षेत । एणादीनां च मृगाणां रुधिरमतिस्रुतरक्तोक्तविधिना सिराव्यधोक्तेन शीघ्रं समाक्षिकमुपयुञ्जीत । तदित्येणादिरक्तम् ।

तत्र च श्यामादिभिः शृतं पयो घृतादियुक्तं शीतं वस्त्यास्थापनेन निषेचयेत् ॥

शेषेष्वपि चासम्यक्प्रयुक्तवमनविरेचनोपद्रवेषु यथामयं दोषादीनपेक्ष्य प्रतिकुर्याद्वस्तिव्यापत्सिद्धिं चेक्षेत ॥

अन्येष्वपि शोधनस्यासम्यग्योगेनोत्पन्नेषु व्याधिषु दोषाद्यपेक्षं कुर्याच्चिकित्साम् । वस्तिव्यापत्सिद्धिं चेक्षेत । एतदौपयिकचिकित्सापरिज्ञानायेत्यर्थः । अधोदोषहरणं प्रति तयोर्वस्तिविरेचनयोः सादृश्यात् । सुबोधम् ॥

एवमुभयतोभागेऽपि शोधने यथावस्थमुत्तिष्ठेत । या तु विरेचने परिकर्तिका तद्वमने कण्ठक्षणनम् । यदधःपरिस्रवः स कफप्रसेको यदधःप्रवाहणं स शुष्कोद्गार इति । भवति चात्र ॥

एवमनन्तरोक्तप्रकारेणोभयतोभागे शोधने वमने च विरेचने चावस्थाविशेषमनतिक्रामन्नुत्तिष्ठेत प्रयतेत । या त्वित्यादिनातियोगे मार्जनात् परिकर्तिकाकण्ठक्षणनयोः सादृश्यम् । हीनयोगेन चोत्क्लेशाल्पपरिस्रवप्रसेकयोर्निस्तननशुष्कोद्गारयोश्च । गतानुगतिका ॥

अतिमात्रमकालेऽल्पं तुल्यवीर्यैरभावितम् ।
असम्यक्संस्कृतं जीर्णं व्यापद्येतौषधं ध्रुवम् ॥
छर्दनं न तु दुश्छर्दे दुर्विरेच्यं न रेचनम् ।
पाययेदौषधं भूयस्तन्निहन्ति तथा हि तौ ॥

अतिमात्रादिकमौषधं ध्रुवमवश्यं व्यापदे भवति । सुबोधम् । तथा दुश्छर्दनं पुरुषं छर्दनमौषधं भूयः प्रभूतं न पाययेत् । दुर्विरेकं च पुरुषं भूयो विरेचनमौषधं न पाययेत् । तथा हि यस्मात् पीतं तद्वमनं विरेचनं च तौ दुश्छर्ददुर्विरेके कर्मणी हन्ति ॥

यस्योर्ध्वं कफसंसृष्टं पीतं यात्यानुलोमिकम् ।
वमितं कवलैः शुद्धं लङ्घितं पाययेत्तु तम् ॥
विबद्धेऽल्पे चिराद्दोषे स्रवत्युष्णं पिबेज्जलम् ।
तेनाध्मानं वमिस्तृष्णा विबन्धश्चाशु शाम्यति ॥

आनुलोमिकमौषधं विरेचनं यस्य पीतं श्लेष्मणा सह मुखेनागच्छति तं पुरुषं वमितं कवलैः शुद्धमुखं लङ्घितं च कृत्वा तमानुलोमिकं पाययेत् । तथा दोषे विबद्धे स्रवत्यल्पं च स्रवति चिराच्च स्रवत्युष्णं जलं पिबेत् । तेनोष्णजलेनाध्मानादिकमाशु शाम्यति ॥

भेषजं दोषरुद्धं चेन्नोर्ध्वं नाधः प्रवर्तते ।
सोद्गारं साङ्गशूलं वा स्वेदं तत्रावचारयेत् ॥

भेषजं शोधनं दोषसंघातेन रुद्धत्वादलसमेव यद्यस्यास्ति उद्गाराङ्गशूले च करोति तदास्य स्वेदमवचारयेत् ॥

सम्यग्विरिक्तस्योद्गारे भेषजं क्षिप्रमुल्लिखेत् ।
अजीर्णमप्रवृत्तौ तु सुशीतैः स्तम्भयेद्भिषक् ॥

सम्यग्विरेकलिङ्गेन विरिक्तस्यापि यदौषधोद्गारो न निवर्तते तदा वमतियो-

गभयात् भेषजमजीर्णे वामयेत् । वमनेन चाप्रवर्तमानं सुशीतैः सेकादिभिर्भिषक् स्तंम्भयेत् । यथा नाधिकं विरेचयति ॥

कदाचिच्छ्लेष्मणा रुद्धं तिष्ठत्युरसि भेषजम्
क्षीणे श्लेष्माणि सायाह्ने रात्रौ वा तत् प्रवर्तते

कदाचिदुपयोगकाल एवौषधं श्लेष्मणा रुद्धमुरसि तिष्ठत् कोष्ठप्राप्त्यभावान्न रेचयति । ततश्चौषधतैक्ष्ण्याच्छ्लेष्माणि क्षीणे कोष्ठं प्राप्य सायाह्ने रात्रौ वा रेचयति ॥

रूक्षानाहारयोर्जीर्णे तिष्ठत्यूर्ध्वं गतेऽपि वा ।
वायुना भेषजे त्वन्यत् सस्नेहलवणं पिबेत् ॥

रूक्षस्यानाहारस्य च वातेनौषधे विरेकं विनैव जीर्णेऽन्यदौषधं तद्द्रेव सस्नेहलवणं पिबेदथवा वायुना पूर्वकार्यं गते भेषजे तिष्ठत्यन्यत् भेषजं सस्नेहलवणं पिबेत् ॥

तृण्मोहभ्रममूर्छाद्याः स्युर्जीर्यति च भेषजे ।
पित्तघ्नं स्वादु शीतं च भेषजं तत्र शस्यते ॥

तथा शोधने भेषजे जीर्यति यदा तृडादीनि स्युः तदा तत्कालमेव पित्तघ्नादिकमन्यत् भेषजं शस्यते ॥

लालाहृल्लासविष्टम्भरोमहर्षाः कफावृते ।
भेषजं तत्र तीक्ष्णोष्णं कट्वादि कफनुद्धितम्

यदा तु कफावृतत्वात भेषजस्य लालादिकं स्यात् तदा तीक्ष्णादिगुणं कफघ्नं भेषजं हितम् ॥

अध्यायमुपसंहरति । अस्मिन्नध्याये द्विविधेऽपि वमनविरेचनाख्ये दोषविरेचने सम्यग्योगविभ्रंशाद्धेतोः ससाधनाः सचिकित्सिता द्वादश व्यापद उक्ताः । कास्ता इत्याह ॥

प्रतिकूला गतिः पाको प्रथितत्वं सगौरवम् ।
दोषोत्क्लेशो भृशाध्मानं परिकर्तः परिस्रवः ॥
प्रवाहिका हृद्ग्रहणं सर्वगात्रपरिग्रहः ।
सह धातुस्रवेणैता द्वादशोक्ताः ससाधनाः ॥
व्यापदो विधिविभ्रंशाद्विविधेऽपि विरेचने ।

प्रतिकूलेत्यादि । प्रतिकूला गतिर्वमनस्याधोगमनम् । विरेचनस्योर्ध्वगमनम् । पाकोऽकृतकार्यस्यैव । शेषा उक्ता एव ॥

उत्पद्यमानासु च तासु तासु
व्यापत्सु संशोधनविभ्रमेण ।
दिशानयैवाशु यतेत सिद्ध्यै
ज्योतिर्हि शास्त्रं नयदुर्नयानाम् ॥

इति कल्पस्थाने तृतीयोऽध्यायः ॥

अन्यासु चानुक्तासु तासु तासु व्यापत्सु संशोधनस्य विभ्रमेण दोषादिविशेषादुत्पद्यमानास्वनेनैव चिकित्सामार्गेण शेषाः स्वोहार्हेणाशु चिकित्सितुं यतेत । यस्मादयं नयोऽयं दुर्नय इत्यस्मिन् विशेषे ज्योतिः प्रकाशकत्वादिति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
कल्पस्थाने तृतीयोऽध्यायः ।

# चतुर्थोऽध्यायः ।

शोधनक्रमेण वस्तेः कल्पनां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो वस्तिकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥

बलां गुळूचीं त्रिफलां सरास्नां
द्विपञ्चमूलं च पलोन्मितानि ।
अष्टौ फलान्यर्धतुलां च मांसात्
छागात् पचेदप्सु चतुर्थशेषम् ॥

पूतो यवानीफलबिल्वकुष्ठ
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुळक्षौद्रघृतैः सतैलै-
र्युक्तः सुखोष्णो लवणान्वितश्च ॥

बस्तिः परं सर्वगदप्रमाथी-
स्वस्थे हितो जीवनबृंहणश्च ।
बस्तौ च यस्मिन् पठितो न कल्कः
सर्वत्र दद्यादमुमेव तत्र ॥

बलादीनां पाकात् क्राथपरिकल्पना । द्विपञ्चमूलं पृथग्द्रव्यम् । यवान्यादिकं कल्कः । कल्कादीनां माने सूत्रोक्तस्य स्मर्तव्यम् । सुबोधम् । बस्तीनां च सर्वेषामपठितकल्कानाममुमेव यवान्यादिकं कल्कं दद्यात् ॥

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वपेष्यः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥

द्विपञ्चमूलस्य पृथक्क्वथितस्य रसः काथो निरूह इति संबन्धः । पेष्यं कल्कम् । पूर्वं यवान्यादि । त्रयः स्नेहाः दोषापेक्षं योज्याः ॥

बलापटोलीलघुपञ्चमूल-
त्रायन्तिकैरण्डयवात् सुसिद्धात् ।
प्रस्थो रसाच्छागरसाऽर्धयुक्तः
साध्यः पुनः प्रस्थसमः स यावत् ॥

प्रियङ्गुकृष्णाघनकल्कयुक्तः
सतैलसर्पिर्मधुसैन्धवश्च ।
स्याद्दीपनो मांसबलप्रदश्च
चक्षुर्बलं चोपदधाति सद्यः ॥

बलादिकान् सुसिद्धाद्रसात् प्रस्थो च्छागमांसरसस्यार्धप्रस्थयुक्तः साध्यो यावत् प्रस्थसमः । प्रस्थशब्दोऽत्र शरावादिमयं परिच्छेदकमाने । निरूह्यस्य कल्केन तथा तैलादियुक्तः । एष वस्तिर्दीपनादिगुणः स्यात् ॥

एरण्डमूलात्त्रिपलं पलाशा-
त्तथा पलांशं लघुपञ्चमूलम् ।
रास्नाबलाछिन्नरुहाश्वगन्धा-
पुनर्नवारग्वधदेवदारु ॥

फलानि चाष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाह्वपुषाप्रियङ्गु-
यष्टीकणावत्सकबीजमुस्तम ॥

दद्यात् सुपिष्टं सहताक्ष्र्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो
वस्तिर्जयेल्लेखनदीपनोऽसौ ॥

जङ्घोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुतां विबन्धम् ।
गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान् कफवातजातान् ॥

एरण्डमूलात्त्रिपलम् । पलाशात्तथेति पलाशमूलात्त्रिपलमिति यावत् । लघुपञ्चमूलद्रव्याणां रास्नादेश्च प्रत्येकं पलानि । फलानि मदनफलान्यष्टौ । छिन्नरुहा गुळूची । आढकोऽष्टाविंशदधिकं शतं पलानाम् । ताभ्यां पचनम् । अस्मिन् काथेऽष्टमशेषिते द्वात्रिंशत्पलशेषे । लवणचतुर्थांशयुक्तम् । पुनस्तस्य दोषाद्यपेक्षिणी मात्रा । जयेदिति जङ्घाशूलादिकेन संबध्यते ॥

चतुष्पले तैलघृतस्य भृष्टः
छागाच्छतार्धो दधिडाडिमाम्लः ।
रसः सपेष्यो बलवर्णमांस-
रेतोग्निनैर्मेयशिरोरुजीष्टः ॥

छागान्मांसाद्रसतः शतार्धं पञ्चाशत्पलानि स रसो मिश्रीभूतस्य घततैलस्य चतुष्पले भृष्टः पक्वस्तथा सह पेष्यैर्यवान्यादिभिर्वर्तत इति सपेष्यो दध्याद्यम्लः । बलादिके वस्तिरिष्टः ॥

यष्ट्याह्वयस्याष्टपलेन सिद्धं
पयः शताह्वाफलपिप्पलीभिः ।
युक्तं ससर्पिर्मधुवातरक्त-
विसर्पवैस्वर्यहितो निरूहः ॥

यष्ट्याह्वलोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्कराक्षौद्रघृतं सुशीतं
पित्तामयान् हन्ति सजीवनीयम् ॥

मधुयष्टीसिद्धं क्षीरं शताह्वादिभिः सर्पिर्मध्वन्तैर्युक्तं वातरक्तादिहितो निरूहः । फलपिप्पल्यो मदनफलमज्जानो निरूहे प्रशस्ताः । सर्वत्र च पाके द्रव्याणि जलेन विना रसं न त्यजन्तीति स्मर्तव्यम् । सुबोधम् ॥

गोपाङ्गनाचन्दनशीतपाकी-
द्राक्षर्धिकाश्मर्यमधूकसेव्यैः ।
पयः शृतं श्वावणिमुद्गपर्णी-
बलास्वगुप्तामधुयष्टिकल्कैः ॥

गोधूमचूर्णैश्च पिचुप्रमाणै-
रिक्षोर्विदार्याश्च रसेन युक्तम् ।
तैलेन यष्टीमधुसाधितेन
सितोपलाक्षौद्रघृतैश्च शीतः ॥

वस्तिः प्रशस्तः ससमस्तदेह-
दाहे सशूलेऽवयवाश्रिते वा ।
गुल्मातिसारभ्रममूत्रकृच्छ्र
क्षीणे क्षतौजोबलसंक्षये च ॥

गोपाङ्गनेत्याद्यवयवाश्रिते वा दाहेऽपि-शूलेऽपि । संक्षयशब्दस्यौजोबलाभ्यां संबन्धः । गोपाङ्गना शारिवा । शीतपाकी चूडामणिः । (नि) चूडामणिः शीतपाकी शिखण्डी कृ-

ष्णलालता । कृष्णा काम्बोजिका गुञ्जा रक्तिका काकसाह्वया । सेव्यमुशीरम् ॥

कोशातकारग्वधदेवदारु-
मूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान् बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥

तान् सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान ।
क्षौद्रस्य तैलस्य फलाह्वयस्य
क्षारस्य तैलस्य च सार्षपस्य ॥

दद्यान्निरूहं कफरोगिताय
मन्दाग्नये चाशनविद्विषे च ।

कोशातकादिनां बृहत्यन्तानां पञ्च पलानि । षोडशगुणे जले क्राथयित्वा दशप्रसृतान् गृह्णीयात् । प्रसृतो द्वे पले क्षौद्रादीनां प्रत्येकम् । फलाह्वयस्येति तैलविशेषणम् । फलं च मदनफलम् । अक्षः कर्षः । अयं निरूहः कफरोगितादिकाय दद्यात् । अशनविद्विडरोचकी ॥

पुनर्नवैरण्डवृषाश्मभेद-
वृश्चीवभूतीकबलापलाशान्
द्विपञ्चमूलं च पलांशकानि
क्षुण्णानि धौतानि फलानि चाष्टौ ॥

विल्वं यवाङ्कोलकुलत्थधान्य
फलानि च स्युः प्रसृतोन्मितानि ।
पयो जलव्याढकसाधितं तत्
क्षीरावशिष्टं शुचिवस्त्रपूतम् ॥

वचाशताह्वामरदारुकुष्ठ-
यष्ट्याह्वसिद्धार्थकपिप्पलीनाम् ।
कल्कैर्यवान्या मदनैश्च युक्तं
नात्युष्णशीतं गुळसैन्धवाक्तम् ॥

क्षौद्रस्य तैलस्य च सर्पिषश्च
नवस्य युक्तं प्रसृतित्रयेण ।
दद्यान्निरूहं विधिना विधिज्ञः
ससर्वसंसर्गकृतामयघ्नः ॥

पुनर्नवादीनि धान्यफलान्तानि क्षीरस्य जलस्य च व्याढकेन क्षीरावशिष्टं क्राथयेत् । मदनान्तानि कल्कः । क्षौद्रतैलनवनीतानां प्रत्येकं पलद्वयम् । सुबोधम् । संसर्गो वृद्वाभ्यां दोषाभ्याम् । तत्कृतान् सर्वानामयान् हन्ति ॥

अर्धार्धविहितान् वस्तीनतश्चित्रान् प्रवक्ष्यते
कोशातकीद्वयेक्ष्वाकुफलजीमूतवत्सकाः ॥
श्यामात्रिवृतयोर्मूलं तथा दन्तीद्रवन्तिजम् ।
प्रकीर्या चोदकीर्या च क्षीरिणी नीलिनीफलम्
सप्तलाशङ्खिनीलोध्रं फलं कम्पिल्लकस्य च ।
स्वकल्कसैन्धवयुताः पक्वाशयविशोधनाः ॥
धातकीपुष्पतकारीजीवन्तीमूलवत्सकाः ।
प्रग्रहः खदिरः कुष्ठं शमीपिण्डीतको यवाः ॥
प्रियङ्गुरर्कमूलीचतरुणीजातियूथिकाः ।
वटाद्याः किंशुकं लोध्रमिति संग्राहिकामताः॥
ग्राहीप्रियङ्ग्वम्बष्ठादिकाथकल्कैः क्रमेण च ।
ऊषकादिप्रतीवापो लेखनस्त्रिफलारसः ॥
मधुरक्राथकल्केन सरसाज्येन बृंहणः ।

कोशातकल्यादिभिरर्धश्लोकैर्विहितान् वस्तीन् प्रवक्ष्यते । चित्रान् शोधनादिभेदेनानेकप्रकारान् । यत्र चत्वारो वस्तयः स्वौषधकल्केन सैन्धवेन च युक्ताः पक्वाशयस्य विशोधनाः । धातक्यादिभिश्चत्वारः संग्राहिका मताः । एषु सामन्यकल्को यवान्यादिः । एषः प्रियङ्ग्वादिगणकाथेनाम्बष्ठादिगणकल्केन च ग्राही मतः । एष त्रिफलारस ऊषकादिगणप्रतीवापो लेखनः । एष च बृंहणो मधुरौषधानां काथेन तेषामेव च कल्केन मांसरसेनाज्येन च युक्तः । जालिन्या विधाने कोशातक्येव द्वाभ्यां भेदाभ्यामुक्ता । प्रकीर्यः पूतिकरजः । उदकीर्या द्वितीयः करञ्जः । क्षीरिणी प्रसिद्धा । किंशुकः पलाशः

**बदर्यैरावणीशेलुशाल्मलीधन्वनाङ्कुराः ॥**
**समाक्षिकाःक्षीरयुताःसास्रजःपिच्छिलास्मृताः**

बदर्यादीनां पृथक् पृथगङ्कुराः माक्षिकादियुक्ताः पिच्छिला वस्तयः स्मृताः । गोभापयैरावणीश्यामाखट्वानामिका च । शेलुः श्लेष्मातकः ॥

**कोलङ्कतककाण्डेक्षुदर्भपोटेक्षुपालिभिः ।**
**दाहघ्नः सघृतक्षीरो द्वितीयश्चन्दनादिभिः ॥**

कोलङ्कतकादिभिः सघृतक्षीरो वस्तिर्दाहघ्नः । चन्दनादिभिर्द्वितीयोऽपि दाहघ्नः । कोलङ्कतको दर्भविशेषः । काण्डेक्षुरिक्षुः । इक्षुपालिका करम्भशालिनामा इक्षुः ॥

**मुष्टिः शाल्मलिवृन्तानां क्षीरसिद्धो घृतान्वितः**
**हितः प्रवाहणे तद्वद्वृन्तैः शाल्मलकस्य च ॥**

शल्मलीपत्राणां करग्राह्यो मुष्टिः । क्षीरेण सिद्धो वस्तिः प्रवाहिकायां हितः । शाल्मलकस्य वृन्तैस्तद्वन्मुष्टिः क्षीरसिद्धो प्रवाहिकायां हित इत्यर्थः ॥

**कर्बुदाराढकीनीपविदुलैः क्षीरसाधितैः ।**
**परिकर्ते तथा वृन्तैः श्रीपर्णीकोविदारजैः ॥**

कर्बुदारादिभिः क्षीरसिद्धैर्वस्तिः परिकर्ते । श्रीपर्णीकोविदारजैर्वृन्तैः क्षीरसिद्धैस्तथा परिकर्ते हितः ॥

**परिस्रवे पयः सिद्धं सवृश्चीवपुनर्नवम् ।**
**आखुकर्णिकया तद्वत्तण्डुलीयकयुक्तया ।**

वृश्चिपुनर्नवाभ्यां सिद्धं क्षीरं वस्तिर्गुदपरिस्रवे हितः । वृश्चीवः क्षुद्रपुनर्नवः । आखुकार्णिकातण्डुलीयकाभ्यां तद्वदिति सिद्धं क्षीरं परिस्रवे हितम् ॥

**अश्वावरोहकः काकनासाराजकशेरुकाः ।**
**सिद्धाः क्षीरेऽतियोगे स्युः क्षौद्राञ्जनघृतैर्युताः**
**न्यग्रयोधाद्यैश्चतुर्भिश्च तेनैव विधिनाऽपरः ।**

अश्वावरोहकादयः क्षीरे सिद्धाः क्षौद्रादियुक्ताः शोधनक्रियातियोगे वस्तयः स्युः । न्यग्रोधाद्यैश्चतुर्भिः न्यग्रोधपिप्पलसदाफललोद्ध्रैस्तेनैव विधिना क्षीरसाधनेन क्षौद्रादियोगेन चापरो वस्तिः शोधनातियोगे । अश्वा-

वरोहोऽश्वकर्णोऽश्वगन्धा च । राजकशेरुको मुस्तकः ॥

बृहतीक्षीरकाकोळी पृश्निपर्णी शतावरी ।
काश्मर्यवदरीमूर्वास्तथोशीरमियङ्गवः ॥
जीवादाने भृतैः क्षीरे द्वौ घृताञ्जनसंयुतौ ।
वस्ती प्रदेयौ भिषजा शीतौ समधुशर्करौ ॥
गोव्यजामहिषीक्षीरैर्जीवनीययुतैरपि ।

जीवादाने द्वौ बस्ती क्षीरेश्रृतौ घृताञ्जनसंयुतौ शीतौ माक्षिकशर्कराभ्यां युक्तौ देयौ। एको बृहत्यादिभिर्द्वितीयः काश्मर्यादिभिः । गोव्यादिक्षीरैर्जीवनीयगणयुक्तैरयमपि वस्तिर्जीवादानेतियोगप्रवृत्तजीवरक्ते ॥

शशैणदक्षमार्जारमहिषाव्यजशोणितैः ।
सद्यस्कैर्मृदितैर्वस्तिर्जीवादाने प्रशस्यते ॥

शशादिशोणितैः सद्यस्कैर्जीवादाने अत्र मृदितैरित्येतावदुक्तम् । हृदये तु अभिमृदितैरित्यत्र यथार्थत्वे भिषजः प्रमाणम् ॥

अथेमान सुकुमाराणां निरूहान् स्नेहनान मृदून
कर्मणा विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक्
क्षीराद्वौ प्रसृतौ कार्यौ मधुतैलघृतास्त्रयः ।
खजेन मथितो वस्तिर्वातघ्नो बलवर्णकृत् ॥

अथानन्तरं क्षीराद्वावित्यादिना निरूहान् पृथग्वक्ष्यामि तांश्च स्नेहनान् मृदूंश्च । केषामित्याह । सुकुमाराणाम् । कर्मणा विप्लुतानां च । कर्मणा विप्लुता अध्वादिक्रिययानवस्थितदेहाः । प्रसृतैरिति प्राकृतिकसंज्ञया लब्धैरिति सर्वत्र वस्तिविधौ सन्तव्यम् । सुबोधम् । प्रसृतो द्वे पले ॥

एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
विल्वादिमूलकाथात्द्वौकौलत्थाद्द्वौसवातजित्

तैलादीनां प्रत्येकं प्रसृतः । विल्वादिपञ्चमूलस्य काथात् द्वौ प्रसृतावित्ययं द्वितीयो वस्तिर्वातजित् ॥

पटोलनिम्बपूतीकरास्नासप्तच्छदाम्भसः ।
प्रसृतः पृथगाज्याच वस्तिः सर्षपकल्कवान्॥
सपञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा ।

पटोलादीनां कथितानामम्भसामेकमेकं प्रसृतम् । घृतादेकं प्रसृतम् । इत्ययं वस्तिः सर्षपकल्केन पञ्चभिश्च तिक्तैर्निम्बगुळूचीवृषपटोलनिदिग्धिकाख्यैर्युक्तोऽभिष्यन्दादिहा ॥

विळङ्गत्रिफलाशिग्रुफलमुस्ताखुकर्णिजात् ॥
कषायात् प्रसृताः पञ्च तैलादेको विमथ्य तान्
निरूहः कृमिहा वेल्लपिप्पलीकल्कयोजितः ॥

विळङ्गादीनां मिश्रितानां कषायात् पञ्चप्रसृतास्तैलादेकः प्रसृत इति तान् सर्वान् प्रसृतान् विमथ्य विळङ्गपिप्पलीभ्यां कल्केन योजितो निरूहः कृमिहा भवति ॥

पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ।
एकैकः प्रसृतो वस्तिः कृष्णाकल्को वृषत्वकृत्

पयस्यादीनां प्रत्येकं प्रसृतः पिप्पलीचूर्णयुक्तो वस्तिर्वाजीकरणः ॥

चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ।
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ॥

तैलादीनां मिश्रितानां चत्वारः प्रसृताः सर्षपकल्केन युक्तो वस्तिर्विट्सङ्गमानाहं च भिनत्ति । दधिमण्डो मस्तु ॥

श्वदंष्ट्राश्मभिदेरण्डक्काथतैलसुरासवात् ।
प्रसृताः पञ्च चपलाकौन्तीयष्ट्याह्वकल्कवान्॥
वस्तिः कवोष्णः सानाहे मूत्रकृच्छ्रे वरो मतः

श्वदंष्ट्रादित्रयकाथस्य तैलादीनां च समानां सर्वेषां मिश्रितानां पञ्च प्रसृताः । चपलादीनां कल्केन युक्तो वस्तिः सानाहे मूत्रकृच्छ्रे वरः श्रेष्ठो मतः । चपला पिप्पली ॥

कोष्ठनिर्हरणे मृदुवस्तिप्रक्रम इदमुच्यते ॥

मृदुवस्तिजडीभूते तीक्ष्णोऽन्यो वस्तिरिष्यते।
तीक्ष्णैर्विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः

मृदुना वस्तिना जडीभूते अप्रवर्तमानदोषे देहे तत्कालमन्यस्तीक्ष्णो वस्तिरिष्यते । तीक्ष्णैश्च वस्तिभिर्विकर्षिते देहे स्निग्धमधुरादिगुणो वस्तिः

मृदुर्वस्तिर्यथा तीक्ष्णत्वं याति तीक्ष्णश्च यथा मृदुत्वं तथोच्यते

तीक्ष्णत्वं मूत्रविल्वाग्निलवणक्षारसर्षपैः ।
प्राप्तकालं विधातव्यं क्षीराज्याद्यैस्तु मार्दवम्

तीक्ष्णत्वमित्यादि । प्राप्तकालं तैक्ष्ण्यं मृदोर्मूत्रादिभिर्विधेयम् । तीक्ष्णस्य च प्राप्तकालमुपयोगि मार्दवं क्षीरादिभिर्मधुरैर्विधेयम् ॥

न केवलं चैत एव वस्तयो यावदिदमपि बोद्धव्यम् ॥

बलकालदोषरोग-
प्रकृतीः प्रविभज्य योजितो वस्तिः ।
स्वैः स्वैरौषधवर्गैः
स्वान् स्वान्रोगात् निवर्तयति ॥

प्रतिव्याधि दोषादिभेदे य औषधवर्गा उक्ताः तैस्तैर्बलादिकं प्रविभज्य बुद्ध्या विकल्प्य वस्तिर्योजितः स्वान् स्वान् योग्यौषधवर्गविषयान् वस्तिसाध्यान्रोगान् निवर्तयति ॥

उष्णार्तानां शीतां-
श्छीतार्तानां तथा सुखोष्णांश्च ।
तद्योग्यौषधयुक्तान्
वस्तीन् संतर्क्य युञ्जीत ॥

उष्णेनौषधादिना आर्तानां शीतान् वस्तीनातुरयोग्यौषधयुक्तान् संतर्क्य विकल्प्य युञ्जीत । शीतार्तानां च तद्वत् सुखोष्णांस्तद्योग्यौषधयुक्तान् युञ्जीत ॥

वस्तीन्न बृंहणीयान
दद्याद्व्याधिषु विशोधनीयेषु ।
मेदस्विनो विशोध्या
ये च नराः कुष्ठमेहार्ताः ॥

शोधनार्थेषु व्याधिषु बृंहणीयान् वस्तीन् न दद्यात् । ये च नराः कुष्ठेन मेहेन वार्ता मेदस्विनश्च तेषां च विशोधनीयेष्वपि बृंहणीयान् वस्तीन् न दद्यात् ॥

न क्षीणक्षतदुर्बल-
मूर्छितकृशशुष्कशुद्धदेहानाम् ।
दद्याद्विशोधनियान्
दोषनिबद्धायुषो ये च ॥

इति कल्पस्थाने चतुर्थोऽध्यायः ॥

क्षीणादीनां बस्तिसाध्यानां न शोधनीयान् वस्तीन् दद्यात् । शुद्धं वमनविरेचनाभ्यामचिरप्रयुक्ताभ्यां शरीरं येषां ते शुद्धदेहाः । तथा दोषे पुरीषे निबद्धमायुर्येषां ते दोषनिबद्धायुषः । क्षीणधातुत्वादेव पुरीषबलेन जीवन्तीत्यर्थः । एषामपि शोधनीयान् वस्तीन् न दद्यादिति

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
कल्पस्थाने चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः ।

---

सिद्धवस्तीन् प्राधान्यात् पृथग्दर्शयितुमध्याय आरभ्यते ॥

अथातः सिद्धवस्तिकल्पं व्याख्यास्यामः । इति हस्माहुरात्रेयादयो महर्षयः ।

सिद्धवस्तीन् प्रयुञ्जीत सर्वदा सर्वदेहिनाम् ॥
निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान्

प्रथमेन श्लोकेन सिद्धवस्तीनां सामान्यं रूपमुच्यते ॥

मध्वित्यादिना बस्तय उच्यन्ते ॥

मधुतैले समे कर्षः सैन्धवात् द्विपिचुर्मिसिः ।
एरण्डमूलकाथेन निरूहो माधुतैलिकः ॥
रसायनं प्रमेहार्शःकृमिगुल्मान्त्रवृद्धिनुत् ॥

मधुतैले समे सूत्रोक्तप्रकारेण । सैन्धवात् कर्षः । मिसिः शतपुष्पा । तस्या द्विपिचुर्द्विकर्ष इत्येतदेरण्डमूलकाथेन निरूहः संज्ञया माधुतैलिकः । सुबोधम् ॥

सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ।
यापनो घनकल्केन मधुतैलरसाज्यवान् ॥
पायुजानूरुवृषणवस्तिमेहनशूलजित् ।
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥
यापनं सैन्धवार्धाक्षहपुषार्धपलान्वितम् ।

एष एवानन्तरोक्तो माधुतैलिको मधुयष्ट्या युक्तश्चक्षुष्यो रक्तपित्तजिच्च भवति । घनस्य मुस्तस्य कल्केन युक्तो निरूहो मध्वादिभिश्च यापनाख्यो भवति । स तु पाय्वादिशूलजित् । द्वितीयं यापनं घृतादिभिः प्रत्येकं प्रसृतांशैः सैन्धवस्यार्धकर्षेण हपुषार्धपलेनान्वितं प्रकल्पयेत् ॥

एरण्डमूलनिष्क्वाथो मधुतैलं ससैन्धवम् ।
एष युक्तरथो वस्तिः सवचापिप्पलीफलः ॥
सकाथो मधुषड्ग्रन्थाशताह्वाहिङ्गुसैन्धवः ।
सुरदारु च रास्ना च वस्तिर्दोषहरः शिवः ॥

पञ्चमूलस्य निष्काथस्तैलं मागधिकामधु ।
ससैन्धवः समधुकः सिद्धवस्तिरिति स्मृतः ॥

एरण्डेत्यादिना वचादित्रययुक्तो वस्तिर्नाम्ना युक्तरथः । सकाथ एरण्डमूलकाथो मध्वादियुक्तो वस्तिः शिवः श्रेष्ठः । षड्ग्रन्धा वचा । सिद्धवस्तिरिति नाम्ना स्मृत आचार्यैः पञ्चमूलादिश्लोकेन ॥

द्विपञ्चमूलत्रिफलाफलविल्वानि पाचयेत् ।
गोमूत्रे तेन पिष्टैश्च पाठातोयदवत्सकैः ॥
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ।
युक्तो वस्तिः कफव्याधिपाण्डुरोगविषूचिषु ॥
शुक्रानिलविबन्धेषु वस्त्याटोपे च पूजितः ।

द्विपञ्चमूलादीनि गोमूत्रे पाचयेत् । तेन पक्वेन वस्तिः पिष्टैः पाठादिभिर्युतः क्षौद्रादिभिश्च । कफव्याध्यादिषु पूजितः । द्वे पञ्चमूले प्रथमे विल्वादिर्बृहत्यादिश्च । फलं मदनफलम् ॥

मुस्तापाठामृतैरण्डबलारास्नापुनर्नवम् ।
मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः ॥
कनीयः पञ्चमूलं च पालिकं मदनाष्टकम् ।
जलाढके पचेत्तच्च पादशेषं परिस्रुतम् ॥
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ।
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ॥
पिष्टैर्यष्टीमिसिश्यामाकलिङ्गकरसाञ्जनैः ।
वस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्धनः ॥
वातासृङ्मोहमेहार्शोगुल्मविण्मूत्रसंग्रहम् ।
विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः ॥
वङ्क्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ॥
हन्यादसृग्दरोन्मादशोफकासाश्मकुण्डलान् ।
चक्षुष्यः पुत्रदो राजा यापनानां रसायनम् ॥

मुस्तादिको वास्तिः सुबोधः । सह पादेन चतुर्भागेन जाङ्गलरसेन वर्तत इति तथोक्तः । एष च मुस्तादिः यापनानां राजा तद्गुणे सातिशय इत्यर्थः । रसायनफलत्वाद्रसायनम् ॥

पृथक् पलांशं विपचेत् पञ्चमूलमगोक्षुरम् ।
क्षीराढके चतुर्थस्थं पिष्टैर्यष्ट्यादिभिर्युतम् ॥
क्षौद्रतैलाज्य सिन्धूत्थयुक्तं वस्तिः सुपूजितः ।
विशेषाद्बालवृद्धस्त्रीसुकुमारसुखात्मनाम् ॥

अगोक्षुरं पञ्चमूलं चत्वारि द्रव्याणि । चतुर्थस्थं पादशेषं कथितम् । एष वस्तिः सर्वाहितोऽपि बालादिषु विशेषात् पूजितः । अगोक्षुरं गोक्षुररहितम् । यष्ट्यादीन्यनन्तरवस्तिपठितानि यष्टिमिस्यादीनि ॥

तद्वत् सहाचरबलाशारिबादर्भसाधितम् ।
क्षीरं वस्तिस्तथाभीरुगुडूचीबृहतीद्वयैः ॥
सिद्धं पयो मागधिकायष्टीमधुककल्कवत् ।

सहाचरादिसिद्धं क्षीरं तद्वदिति पूर्ववत् कल्कादियुक्तं तत्र पूर्वस्मिन्नेव विषये । अभीर्वादिसिद्धं पयो मागधिकादिकल्कवत्तथा पूर्वगुण इत्यर्थः ॥

पञ्चमूलं बृहत्यादि प्रतिद्रव्यं पलोन्मितम् ।
द्विपलं शालिगोधूमयवमाषं सषष्टिकम् ॥

तैः सिद्धं छागलं क्षीरं कुक्कुटाण्डरसः सिता ।
साज्यक्षौद्रद्विलवणस्तैर्वस्तिः शुक्रकृत्परम् ॥
कल्पोऽयं शिखिगोनर्दमत्स्याद्यण्डरसेष्वपि ।

बृहत्यादि पञ्चमूलादिना सिद्धं छागलं क्षीरं कुक्कुटाण्डरसादिना युक्तो वस्तिः परं शुक्रकृत् । अस्मिन्नेव च वस्तौ कुक्कुटरसस्थाने शिख्यादीनामन्यतमस्याण्डरसयोगात् त्रयो वस्तयो भवेयुः । अण्डेषु च रसोऽन्तर्भवति ॥

रसः कुळीरमांसस्य चटकाण्डरसान्वितः ।
सशर्कराघृतमधुर्वस्तिर्वृष्यतमो मतः ॥

कुळीरमांसस्य रसः चटकाण्डरसेन युक्तः सशर्करादिश्च वस्तिर्वृष्यतमः । कुळीरो मत्स्यः कर्कटकाख्यः ॥

वस्तसूकरजैर्मुष्कैः कुळीरचटकामिषैः ।
सिद्धं पयो वस्तशुक्रमुञ्चटेक्षुरकं मधु ॥
तैर्घृताढ्योऽल्पलवणो वस्तिर्वृष्यतमः परम् ।
सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥

वस्तमुष्कादिना सिद्धं पयो वस्तशुक्रादिना युक्तं घृताढ्योऽल्पलवणश्च वस्तिर्वृष्यतमः परमत्यर्थम् । बस्तः छगलः । मुष्को वृषणः (नि) उच्चटा सोमवल्ली च प्रचला तरळा तथा । महौषधी सर्वगमा वृद्धिदा वर्धिता पुरा । इक्षुरकं गोक्षुरकः । एषु च वृष्यवस्तिषु दीयमानेष्वात्मगुप्तादिभिः सिद्धेन पयसा भोज्यम् ॥

अतो दशदशाहेन यस्तु वस्तीन् निषेवते ।
वाजीव पुष्टः सवृषो गच्छति प्रमदाशतम् ॥
ऐते माक्षिकसंयुक्ताः कुर्वन्त्यतिवृषं नरम् ।

अतो वृष्यादिकाद्दशाहेन प्रतिदिवसमेकोपयोगेन दश वस्तीन् यो निषेवते स वृषोऽक्षीणशुक्रो वाजिवत् पुष्टः प्रमदाशतं गच्छति । एते वृष्या वस्तयो माक्षिकयुक्ता अतिवृषं नरं कुर्वन्ति ॥

नातियोगं न चायोगं स्तम्भिनस्ते च कुर्वते॥

एते चातियोगं न कुर्वते । आहिताश्च नायोगं कुर्वते ॥

सर्ववस्तिषु सामान्येनान्तरान्तरानुवासनमुक्तं निरूहान्मरुतोभयमित्यादिना । तत्प्रतिषेधार्थमाह ॥

निरूहा लेखनाः प्रायो बृंहणाः स्नेहवस्तयः ।
यापनेषूभयं तस्मान्नेष्टं तेष्वनुवासनम् ॥

निरूहा इत्यादि । ये निरूहास्ते प्रायेणैकान्तलेखनाः । ये च स्नेहवस्तयस्ते प्रायेणैकान्तबृंहणाः । तच्चोभयमपि लेखनत्वं बृंहणत्वं च यतो यापनेष्वतस्तेष्वनुवासनं नेष्यते कारणाभावात् । तस्मान्निरूहा अप्येते बृंहणत्वेनानुवासनं नापेक्षन्त इति ॥

मृदुत्वान्न निवर्तन्ते यस्य त्वेते प्रयोजिताः ।
समूत्रैर्वस्तिभिस्तीक्ष्णैरास्थाप्यः क्षिप्रमेव सः॥

एते च यापनाः स्वभावादेव मृदुत्वाद्धेतोर्यदि कस्यचिन्न प्रत्यागच्छन्ति ततः सोऽन्तर्वस्तिः क्षिप्रमेव तीक्ष्णैर्वस्तिभिः समूत्रैरास्थाप्यः ॥

शोफाग्निनाशपाण्डुत्वशूलार्शःपरिकर्तिकाः ।
स्युर्ज्वराश्चातिसाराश्च यापनात्यर्थसेवनात् ॥
अरिष्टक्षारशीध्वाद्यैस्तत्रेष्टा दीपनी क्रिया ।
युक्त्या तस्मान्निषेवेत यापनान् न प्रसङ्गतः॥

यापनानामत्यर्थसेवनाच्छोफादयः स्युः । तेषु च शोफादिष्वरिष्टादिभिर्दीपनी क्रियेष्टा । तस्मादुक्ताद्धेतोर्यापनान् युक्त्या सुखसंवाहनलक्षणया सेवेत न त्वतिप्रसङ्गतः ॥

तेषु च यापनेष्वनेन प्रकारेण निष्परिहारता सुखोपयोग्यत्वं भवति । केनेत्याह ॥

मृद्वल्पौषधसंयोगात् पादहीनप्रमाणतः ।
अल्पकालोपयोगाच्च तेषु निष्परिहारता ॥

मृद्वित्यादि । मृदुनोऽल्पमानस्य चौषधस्य संयोगात् । तथा सूत्रे यत्र यत्र यत् प्रमाणमुक्तं तत्र तत्र यापनानां पादहीनं प्रमाणं ततः अल्पं च कालमुपयोगादिति ॥

द्रव्येषु यापनीयेषु सिद्धान् स्नेहान् पृथक् पृथक्
वस्तीन् सर्वेषु वा युञ्ज्यात् परिहारविवर्जितान्

अथवा सर्वेषु विशेषेण पुरुषेषु पृथग्यापनीयद्रव्यसिद्धान् स्नेहान् निष्परिहारान्युञ्ज्यात् ॥

सहाचराभीरुबलारास्नागोक्षुरकात् पृथक् ।
तुलां जलद्रोणशते पचेत् द्रोणावशेषिते ॥
पूतशीते विसद्राक्षातवक्षीरीनिदिग्धिकाः ।
महासहाक्षुद्रसहायष्टीमधुमधूलिकाः ॥
जीवकर्षभकोदीच्यमृणाळोत्पलचन्दनम् ॥
खर्जूरताळमज्जात्मगुप्तातामलकीकणाः ।
पटोलमेदात्वक्पत्रशीतपाक्योदनाह्वयाः ॥
कल्कीकृत्य क्षिपेत्तस्मिन्पृथक्चप्रस्थसंमितम् ।
रसं वराहमहिषवस्तमुष्कोद्भवं तथा ॥
शिखिकुक्कुटहंसाण्डसंभवं तैलसर्पिषी ।
धात्रीविदारीस्वरसं गव्यक्षीराढकद्वयम् ॥
ब्रह्मभेरीमृदङ्गादिनिनादैः साधितं च तत् ।
सितच्छत्रकृतच्छायं सितवस्त्रावगुण्ठितम् ॥
आरोपितं गजस्कन्धे पूजयित्वा वृषध्वजम् ।
कृत्वा स्वस्त्ययनं दद्यात् स्नेहवस्तिमयन्त्रणम्
प्राप्तस्तेनातिवृषतां श्रमयेद्वनिताशतम् ।
निर्वलीपलितः कान्तश्चिरजीवी भवेत् स च॥
नष्टशुक्रक्षतक्षीणविषमज्वरिणां हितः ।
व्यापन्नार्तवशुक्रानां पुत्रदाता रसायनम् ॥

सहाचरादीनां पञ्चशतानि पलानि जलस्य द्रोणशतम् । कथितशेषो द्रोणः । पूते शीते च बिसादि कल्कीकृत्य सूत्रविधानेन क्षिपेत् । वराहादीनां मुष्करसं पृथक् प्रस्थसंमितम् । निनादशब्दस्य ब्रह्मादिभिः संबन्धः । ब्रह्मनिनादो वेदघोषः । सुबोधम् । अभीरुः शतावरी । मधूलिका गुडतृणः शराद्यन्यतमकाण्डः । उदीच्यं वाळकम् । मृणाळं बिसाङ्कुरम् । (नि) चूडामणिः शीतपाकी शिखण्डी कृष्णला तथा । उच्चटा ताम्रिका गुञ्जा चतस्रः काकसाह्वया । ओदनपाकी नीलसहचरः । वराहः सूकरः ।

बस्तः छागलः । धात्र्यामलकम् । विदारी विदारिका । ब्रह्म वेदः । भेरी दुन्दुभिः । तेनेति स्नेहवस्तिना सहचराद्येनातिवृषतां प्राप्तो वनिताशतं श्रमं नयेत् । स च निर्वलीपलितत्वादिमान् भवेत् । एष च बस्तिर्नष्टशुक्रादीनां हितः । पुत्रदाता रसायनं च ॥

एवंचवस्तयोऽन्येऽपिकल्प्याःपाक्याश्चनैकशः ।
शतं वारान् सहस्रं वा पाचयेत् संभवे सति॥

एवं चानया दिशान्येऽपि स्वबुध्या बृंहणा बस्तयः कल्प्याः । यथासंभवं चानेकशः पाक्याश्च शुक्रकरौषधैः ॥

दोषघ्नाः सपरीहारा वक्ष्यन्ते स्नेहवस्तयः ।

दशमूलत्यादिना स्नेहवस्तयो वक्ष्यन्ते । ये दोषघ्नाः सपरीहाराश्च । परिहारा येषां विद्यन्ते । यन्त्रणां विना बाधावहा इत्यर्थः ॥

दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्यैरण्डपूतीकभार्ङ्गीवृषकरोहिषम् ॥
शतावरीं सहचरं काकनासां पलांशकम् ।
यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान् ॥
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ।
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ॥
आनुवासनमित्येतत् सर्ववातविकारनुत् ।
अनूपानां वसा तद्वज्जीवनीयोपसाधिता ॥

दशमूलादीनां प्रत्येकं पृथक् पलम् । यवादीनां द्वे पले प्रत्येकामिति क्वाथे जीवनीयादिकल्कैरन्वितं सिद्धं तैलमनुवासनं सर्ववातविकारनुत् आनूपानां वराहादीनामन्त्यवर्गत्रितयोक्तानां प्राणिनां यथासंभवं बसा जीवनीयैरुपसाधिता तद्वदनुवासनं सर्ववातविकारनुत् भवति ॥

शताह्वायवबिल्वाम्लैस्तैलं सिद्धं समीरणे ।
सैन्धवेनाग्निवर्णेन तप्तं चानिलजिद्घृतम् ॥

शताह्वादिसिद्धं तैलं समीरणेऽनुवासनम् । अतीवानले तप्तेन सैन्धवेन तप्तं घृतमनिलजिदनुवासनम् ॥

जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ।
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम्
पिष्ट्वा तैलं घृतं क्षीरे साधयेत चतुर्गुणे ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ।
रजःशुक्रामयहरं पुत्रीयं चानुवासनम् ॥

जीवन्त्याद्ये स्नेहाच्चतुर्गुणं क्षीरम् । कल्कः स्नेहाच्चतुर्थांशेन । एतत्तैलघृतमनुवासनं बृंहणत्वादिगुणम् ॥

शिशिरस्पर्शवीर्यैश्च पिष्टैः क्षीरे चतुर्गुणे ॥
तैलपादं घृतं सिद्धं पित्तघ्नमनुवासनम् ।

शीतस्पर्शैः शीतवीर्यैरेव च केवलशीतस्पर्शवीर्यैर्द्रव्यैर्घृतं सिद्धं घृतात् क्षीरे चतुर्गुणे तैलं पादेन समं यस्य । एतदनुवासनं पित्तघ्नम् ॥

सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ।
ह्रीबेरं मधुकं भार्ङ्गी देवदारुसकट्फलम् ॥
नागरं पुष्करं मेदा चविका चित्रकः शटी ।
विळङ्गातिविषे श्यामा हरेणुर्नीलिनी स्थिरा॥
बिल्वाजमोजचपला दन्ती रास्ना च तैः समैः
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥
बध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥

सैन्धवादिभिः समैः साध्यं तिलतैलमेरण्डतैलं वा तदनुवासनं कफरोगनुत् बध्मादींश्च हन्यात् । निचुलं दीर्घपत्रो वेतसः । ह्रीबेरं वाळकम् । कट्फलं सोमवल्कः । श्यामा त्रिवृत् । चपला पिप्पली ॥

साधितं पञ्चमूलेन तैलं बिल्वादिनाथवा ।
अन्वासनं श्लेष्महरं द्रव्यैर्वा कफघातिभिः ॥
फलैरष्टगुणे चाम्ले सिद्धमन्वासनं कफे ।

बिल्वादिना वा पञ्चमूलेन साधितं तैलमनुवासनं श्लेष्महरं भवति । अथवा कफघातिभिर्द्रव्यैः शीतशिवशतपुष्पेत्यादिना शोधनादिगणे पठितैः स्नेहादष्टगुणेऽम्ले काञ्जिकादौ सिद्धं तैलमनुवासनं श्लेष्महरम् ॥

शूलानाहे तु तद्युक्तो निरूहः पटुमूत्रवान् ॥

यदा तु सकफस्य शूलमानाहश्च भवति तदा तेन कफहरद्रव्यसिद्धेन तैलेन युक्तो योग्यो निरूहः पटुना लवणेन मूत्रेण च युक्तो विधेयः ॥

पृच्छति स्म मुनिमित्यथ धीमा-
नग्निवेश इह किन्तु फलानाम् ।
वस्तिकर्मणि हितं सततं स्या-
त्तं पुनर्वसुरिति प्रशशास ॥

इह कुष्ठहिता गरागरी
हितमिक्ष्वाकुफलं प्रमेहिणाम् ।
कुटजस्य फलं हृदामये
प्रवरं कोशफलं तु पाण्डुषु ॥

उदरे कृतवेधनं हितं
मदनं सर्वगदाविरोधि च ।
मधुरं सकषायतिक्तकं
तदरूक्षं सकटूष्णपिच्छिलम् ॥

कफपित्तहृदाशुकारि य-
न्निरपायं पवनानुलोमि च ।
प्रवरं तदतः फलादिषु
स्मृतमास्थापनयोजनास्विति ॥

पृच्छतीत्यादिना फलानां मध्याद्वस्तिकर्मणि किं हितं स्यादिति । अथेत्यग्निवेशप्रश्ने । तमाग्निवेशं पुनर्वसुरिति प्रशशास । किमित्याह इहेत्यादि । उभयत्रापीहेत्यायुर्वेदे । सुबोधम् । (नि)जीमूतको देवदाडास्तिक्तकोशा गरागरी । प्रोक्ताखुविषहा वेणी देवताळी च ताडकः । कटुकालाबुनी तुम्बी लम्बा पिण्डफला तथा । इक्ष्वाकुः क्षत्रियवरस्तिक्तबीजा महाफला । कुटजफलमिन्द्रयवम् । कोशफलं धामार्गवाख्याया राजकोशातक्याः फलम् । कृतवेधनं घण्डोलिकाख्यायाः कोशातक्याः फलम् । तदिति मदनम् । सर्वगदाविरोधित्वे हेतुर्मधुरा-

द्विगुणत्वेन । वातद्विहितत्वे च । पिच्छिलं मार्दवापादनम् । आशु स्वं कर्म करोतीत्याशुकारी । निरपायमयोगादिना अपायं न करोत्यतो मधुरत्वादिहेतोस्तत् फलादिषु मदनफलादिषु शोधनादिगणपठितेषु वस्तिद्रव्येषु प्रवरं श्रेष्ठमास्थापनानां योजनासु स्मृतमाचार्यैः ॥

अथ मुनिवृषभे निगद्य वाक्यं
स्थितवति विज्ञपयांबभूव भूयः ।
इदमतिगहनं सहान्यशिष्यै-
रवनिगतोऽञ्जलिमग्रतो निधाय ॥

अथानन्तरं मुनिवृषभे पुनर्वसौ फलकल्पनावाक्यं निगद्योक्त्वा स्थितवति वाक्याद्विरतेऽग्निवेशोऽञ्जलिमग्रतो निधायावनौ निपत्य भूयः पुनर्विज्ञपयांबभूवान्यैर्भेळादिभिः शिष्यैः सह । किमित्याह ॥

चित्रकर्मगुणकृद्गुरुणोक्तो
वस्तिरूर्ध्वमथ चैति न नाभेः ।
शीघ्रमापतति चानु स देहात्
सर्वतः कथमपोहति दोषान् ॥

चित्रेत्यादि । गुरुणा भवता वस्तिर्विचित्रकर्मकृत् विचित्रगुणकृच्चोक्तः । अथ च वस्तिर्नाभेरूर्ध्वं नैति । न च बहुकालं देहे तिष्ठत्यपि तु शीघ्रमापतत्येवंस्वरूपः स कथं दोषानपोहतीति विज्ञापना ॥

एवं विज्ञप्तो गुरुः पुनर्वसुस्तमाग्निवेशमित्यूचे किमित्याह ॥

ऊचे गुरुस्तिमितमारुतवश्यमेतद्
देहस्य यद्बहिरुपाश्रितमन्तरे वा ।
दुष्टस्य तस्य जनयन्ननुलोमतां तु
वस्तिर्हिनस्ति विषमानपि रोगपूगान् ॥

देहस्य यत्किञ्चित् बहिराश्रितं कान्तिवर्णगमनग्रहणादि यच्चान्तराश्रितं धात्वादि तत् सर्वं मारुतवश्यं वातवशात् भवति । तस्य तु सर्वशरीरोपकारकरणभूतस्य वायोर्वस्तिर्दुष्टस्य सतोऽनुलोमतां जनयाद्विषमानपि कृच्छ्रानपि रोगपूगान् व्याधिसङ्घान् हिनस्ति ॥

शाखागताः कोष्ठगताश्च रोगा
मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो
वायोः परं जन्मनि हेतुरस्ति ॥
विट्श्लेष्मपित्तादिमलाचयानां
विक्षेपसंहारकरो हि वायुः ।
तस्यातिवृद्धस्य शमाय नान्य-
द्वस्तेः समं भेषजमस्ति यस्मात् ॥
शाम्यन्ति यत्नेन जितेऽनिले च
तदीरिताः पित्तकफादयोऽपि ।
तस्माच्चिकित्सार्धमिति ब्रुवन्ति
सर्वां चिकित्सामपि वस्तिमेके ॥

अपि च ये रोगाः शाखागताः सन्ति ये च कोष्ठगता ये च मर्मादिजास्तेषां रोगाणां जन्मनि वायोः परमन्यो हेतुर्नास्ति । विडादिमलाचयानां च वायुरेव विक्षेपसंहारौ करोति यस्मात् । यस्माच्च तस्य वायोरतिवृद्धस्य शमायान्यत् भेषजं

वस्तिसमं नास्ति । यस्माच्च तेन वस्तिनानिले वायौ जिते तदीरिताः पित्तादयोऽपि शाम्यन्ति । तस्माद्धेतोराचार्याः चिकित्सार्धमिति नाम्ना वस्तिं ब्रुवन्ति । एक आचार्याः वस्तिं सर्वां चिकित्सां ब्रुवन्ति वस्तिरेव चिकित्सेत्यर्थः । शाखा रक्तादयो धातवः । तथा कोष्ठो महास्रोतः । मर्म हृदयादि । ऊर्ध्वाङ्गं शिरः । अङ्गशब्देन देहपर्यायेणोर्ध्वादीनां संबन्धः । पित्तादीत्यादिशब्देन स्वेदादीनां ग्रहणम् । कफादय इति रसादीनां ग्रहणम् ॥

यच्च पक्वाशयस्थोऽपि दोषानापादमस्तकम् ।
वीर्येण वस्तिरादत्ते खस्थोऽर्को भूरसानिव ॥

यच्चेत्यादिनापरो हेतुर्वस्तेरतिशये । पक्वाशयस्थितोऽपि वस्तिरापादतलमस्तकं स्थितान् दोषान् वीर्येणादत्ते । यथा खस्थ आकाशस्थोऽर्को भूरसान् दूरस्थानप्यादत्ते ॥

यत्तत्रौषधवीर्यं हि तदपानेन वायुना ।
पर्याप्तमचिरादेव समानः प्रतिपद्यते ॥
समानादुत्तरं चैवं व्यानाद्याः पवनाः क्रमात्
ते तृप्ताः प्रकृतिं याताः शरीरानुग्रहे स्थिताः॥
प्रसह्य पित्तश्लेष्माणौ यथास्थानं निवेश्य च ।
संतर्पयन्ति परितः स्वान् स्वान् भूतगुणांस्तनौ

यत्तत्रेत्यादिना पूर्वोक्ते युक्तिः । तत्रेति वस्तौ यदौषधानां वीर्यं तदपानाख्येन वायुना समन्तात् प्राप्तमचिरादेव वीर्यं समानाख्यः प्राप्नोति । समानस्य पश्चाद्व्यानोदानप्राणाः । क्रमेण पञ्च वायव इत्यौषधवीर्येण तृप्ताः प्रकृतिं स्वरूपं यातास्तनौ शरीरे स्वान् स्वान् वायव्यान् भूतगुणांस्तैर्गुणैस्तर्पयन्ति परितः समन्तात् । किंभूता आह । शरीरानुग्रहे स्वास्थ्यसंवाहने स्थिताः । किं कृत्वाह । प्रसह्य पित्तश्लेष्माणौ यथास्वं स्थाने निवेश्य । तर्पयन्ति परितश्च ॥

व्यानस्तिर्यगपानोऽधः प्राणश्चोर्ध्वं प्रकर्षति ।
यथास्वमेव नाडीभिर्हारिणीभिरिवोदकम् ॥

वस्तिं व्यानस्तिर्यगपकर्षति । अपानश्चाधः प्राणश्चोर्ध्वमपकर्षति यथात्मीयनाडीभिः । यथान्यः कश्चिद्धारिणीभिः केदारेषूदकमपकर्षति । हारिण्यः केदारजलसंचरणवीथ्यः ॥

एवं वातैः सिराभिश्च वपुर्वस्तिः सुयोजितः ।
व्याप्नुवन् प्रसभं हन्ति शुक्रक्षीनपि यक्ष्मणः ॥

एवमित्यादिना निगमनम् । वस्तिः सुप्रयोजितः सन् वातैर्हेतुभिः सिराभिश्च वपुर्व्याप्नुवन् शुक्रक्षीनपि यक्ष्मणो व्याधीन् प्रसभं हन्ति ॥

वस्तिस्तस्मात् सर्वकर्मप्रधानं
सर्वातङ्कान् हन्ति निःशेषतश्च ।
स्रोतांस्यन्तः शोधयित्वा च कुर्या-
दोजस्तेजः शुक्रमेधाग्निदीप्तिम् ॥

इति कल्पस्थाने पञ्चमोऽध्यायः

तस्मात् सर्वकर्मणां वमनादीनां वस्तिः प्रधानं निःशेषतश्च सर्वानातङ्कान् हन्ति । अन्तःस्रोतांस्यणूनि शोधयित्वा ओजःप्रभृतींश्च कुर्यात् ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां कल्पस्थाने पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ।

---

वस्तीनां कल्पनां प्रदर्शयित्वा तेषामेवोपयोगे व्यापदस्तत्साधनं च प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो वस्तिव्यापत्सिद्धिं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

विबन्धगौरवाध्मानशिरोरुग्दाहनोर्ध्वगाः ।
कुक्षिशूलाङ्गरुग्विध्माहृत्पीडाकर्तनस्रवः ॥
अयोगादतियोगाच्च वस्तेः स्युष्षट्षडापदः ।

वस्तरयोगाद्विबन्धादयः षडापदो व्याधयः स्युः । तस्यैवातियोगात् कुक्षिशूलादयः षडापदः स्युः । एताश्चापदः प्रधानाः कीर्तिता एतदनुबन्धिनां हि पृथगेव वक्ष्यमाणत्वात् । वाहनं प्रवाहिका । ऊर्ध्वगाख्या व्यापदत्र वस्तिर्मुखनासिकाभ्निरेतीति । कर्तनं नाभ्यादीनां कर्तनमिव । स्रवोऽसृगादिपरिस्रवः ॥

अस्निग्धेत्यादिना प्रच्छाद्यं सर्षपैः शिर इत्येवमन्तेन ग्रन्थेन षण्णामयोगापदां क्रमेण हेत्वादिकमुच्यते । वस्तिरत्युष्णेत्यादि श्रेष्ठं भिषग्जितमित्येवमन्तेनातियोगापदाम् ॥

अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ॥
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ।
वस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ॥
करोति वातविण्मूत्रविबन्धमतिदारुणम् ।
नाभिवस्तिरुजां दाहं हृल्लेपं श्वयथुं गुदे ॥
कण्डूं गण्डानि वैवर्ण्यमरतिं वह्निमार्दवम् ।

तत्रास्निग्धादिगुणस्य पुंसः शीतादिगुणो वस्तिर्दोषं संक्षोभ्य दुर्बलत्वाच्छीतवीर्यत्वात्तं क्षुब्धदोषमनिर्हरन्वातादीनां विबन्धमतिदारुणं करोति नाभिदाहादिकं च । अल्पद्रव्यमात्रः स्नेहाम्लमूत्रादिवर्जितः ॥

क्वाथद्वयं प्राग्विहितं मध्येदोषेऽतिसारिणि ॥
उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते ।
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम्

प्राक्चिकित्सिते मध्यदोषेऽतिसारिणि क्वाथद्वयं विहितं प्रमथ्याख्यं मागधिकादीनां जलजलदादीनां च तस्मात् क्वाथद्वयाद्दोषाद्यपेक्षयैकस्य क्वाथस्य तत्रायोगस्य षड्विधत्वान्नाभिशूलादिके पानं प्रशस्यते । फलवर्त्यादिकं च प्रशस्यते । कालं ज्ञात्वा विरेचनयोग्ये विरेचनं हितम् ॥

विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ।
सुराविण्मूत्रवान् वस्तिः सप्राक्पेष्यस्तमानयेत्

बिल्वमूलादिमान् बस्तिः प्राक्प्रोक्तैर्य-बान्यादिभिर्बस्तिकल्पोक्तैर्युक्तस्तमयोगिनं बस्तिमानयेत् । विट् च मूत्रं च प्राणिनामेव । इति विबन्ध उक्तः ॥

सशेषाम इत्यादिना गौरवमुच्यते ॥

सशेषामे निरूहेण मृदुना दोष ईरितः ।
मूर्छयत्यानिलं मार्गं रुणद्ध्यग्निं हिनस्ति च ॥
गौरवक्लमहृच्छूलदाहसंमोहवेष्टनम् ।
ततः कुर्यादुपचरेत्तं रूक्षस्वेदपाचनैः ॥

सशेषामेऽनुत्पन्ननिरामके पुरुषे मृदुना निरूहेण दोष ईरितोऽनिलं वायुं मूर्छयति ज्वलयति मार्गं च रुणद्धि अग्निं च हिनस्ति ततोऽनन्तरं गौरवादिकं कुर्यात् । तमातुरं रूक्षादिभिरुपचरेत् ॥

पिप्पलीकर्तृणोशीरदारुमूर्वाशृतं जलम् ।
पिबेत् सौवर्चलोन्मिश्रं दीपनं हृद्विशोधनम् ॥
वचानागरषड्ग्रो वा दधिमण्डेन मूर्छिताः ।
पेयाः प्रसन्नया वा स्युररिष्टेनासवेन वा ॥

तत्र च पिप्पल्यादिभिः शृतं जलं सौवर्चलोन्मिश्रं पिबेत् । तद्धि दीपनं शोधनं च । अथवा वचादयो दधिमण्डेन मस्तुना मूर्छिता आलोडिताः प्रसन्नया वा पेयाः स्युः । आसवेन वारिष्टेन वा पेयाः स्युः ॥

दारुत्रिकटुकं पथ्यां पलाशं चित्रकं षटीम् ।
पिष्ट्वा कुष्ठं च मूत्रेण पिबेत् क्षारांश्च दीपनान् ।
बस्तिमस्य विदध्याच्च समूत्रं दाशमूलिकम् ।

दार्वादिकं च मूत्रेण पिष्टं पिबेत् । चिकित्सितोक्तांश्च दीपनान् क्षारान् पिबेत् । अस्य चायोगिनो दशमूलनिर्वृत्तं बस्तिं समूत्रं विदध्यादित्युक्तं गौरवम् ॥

युक्त इत्यादिनाध्मानमुच्यते ॥

युक्तोऽल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा
बस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात् समीरणम्
सविमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम्
विदाहं गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ।

दोषाढ्यादिके पुरुषेऽल्पवीर्यो बस्तिर्युक्तो दोषैरावृतत्वाद्रुद्धमार्गः सन् समीरणं वातं रुन्ध्यात् । सोऽनिलः समीरणो रुद्धमार्गत्वाद्विमार्गग आध्मानादीन् कुर्यात् । इतश्चेतश्च कोष्ठेऽनिलो धावति ॥

स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत् ।
बिल्वादिश्च निरूहः स्यात् पीलुसर्षपमूत्रवान्
सरलामरदारुभ्यां साधितं चानुवासनम् ।

तत्रायोगे स्वभ्यक्तस्विन्नगात्रस्य वर्तिं प्रयोजयेत् । बस्तिकल्पोक्तश्च बिल्वादिनिरूहः पील्वादिमांस्तत्र स्यात् । सरलदेवदारुभ्यां साधितमनुवासनं स्यात् । अर्थात्तैलमित्युक्तमाध्मानम् ॥

बहुदोषेत्यादिना शिरोरुगुच्यते ॥

बहुदोषेऽबले क्रूरकोष्ठे बस्तिस्तनुर्मृदुः ।

शीतोऽल्पश्चावृतो दोषैः प्रतिहन्ति समीरणम्
ऊर्ध्वं सोऽनुसरन देहं कुर्याद्वायुः शिरोरुजम्
ग्रीवास्तम्भं प्रतिश्यायं बाधिर्यं दृष्टिविभ्रमम्

बहुदोषबलरहितादिके तनुत्वादिगुणो वस्तिर्युक्तो दोषैरावृतत्वात् समीरणस्य वेगप्रतिघातं करोति । स प्रतिहतो वायुरूर्ध्वं देहमनुसरञ्छिरोरुगादीन् कुर्यात् । दृष्टिविभ्रमो दृष्टिविकारः ॥

तमुष्णतैललवणप्रदिग्धं स्विन्नमर्दितम् ।
तीक्ष्णैर्धूमैः प्रधमनैर्नस्यैरास्यविरेचनैः ॥
विरेकैर्वस्तिभिश्चाशु योजयेदानुलोमिकैः ।

तमातुरमुष्णतैललवणाभ्यां प्रदिग्धं पश्चात् स्विन्नं पश्चाच्च मर्दितं तीक्ष्णैरानुलोमिकैश्च धूमादिभिर्योजयेदित्युक्ता शिरोरुक् ॥

स्निग्धस्विन्नेत्यादिना वाहनमुच्यते ॥

स्निग्धस्विन्ने महादोषे वस्तिर्मृद्वल्पभेषजः ।
उत्क्लेश्याल्पं हरेद्दोषं जनयेच्च प्रवाहिकाम् ॥
शोफं वस्तावपाने च सदनं चोरुजङ्घयोः ।
विबद्धमारुतो जन्तुरभीक्ष्णं सः प्रवाहते ॥

महादोषेऽतिस्निग्धेऽतिस्विन्ने च यो वस्तिरल्पशक्तिरल्पमानश्च स दोषमुत्क्लेश्याल्पं हरेत् । प्रवाहिकां जनयेच्च । प्रवाहिकाया लक्षणमुक्तम् । वस्तिशोफादिकं च जनयेत् । स च जन्तुर्विबद्धमारुतत्वादत्यर्थं प्रवाहते निस्तनति ॥

स्वेदाभ्यङ्गनिरूहांश्च शोधनीयानुलोमिकान् ।
विदध्याल्लङ्घयित्वा च वृत्तिं तस्य विरिक्तवत्

तस्यातियोगिनः स्वेदादीन् विदध्यात् । किंभूतानाह । शोधनीयांश्च वायोर्मार्गानुलोमनांश्च । तस्य च लङ्घयित्वा विरिक्तवत् पेयादिकेन वृत्तिं विदध्यात् । इत्युक्तं वाहनम् ॥

कुर्वत इत्यादिनोर्ध्वग उच्यते ॥

कुर्वतो वेगसंरोधं पीडितो वातिमात्रया ।
अस्निग्धलवणोष्णो वा वस्तिरल्पोऽल्पभेषजः
मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥
निरेतिमूर्छाहृल्लासतृड्दाहादीन् प्रवर्तयन् ।

वेगसंरोधं कुर्वतः पुरुषस्यास्निग्धत्वादिगुणो वस्तिर्मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकाभ्निरेति मूर्छादीन् प्रवर्तयन् अतिमात्रया वा प्रणीयमानः पीडितः ॥

मूर्छाविकारं दृष्ट्वास्य सिञ्चेच्शीताम्बुना मुखम्
वीजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ॥

अस्य त्वातुरस्य मूर्छाविकारं दृष्ट्वा झटिति शीताम्बुना मुखं सिञ्चेत् । एवं हि वस्तिरूर्ध्वं न याति । यावच्च क्लमनाशस्तावद्व्यजनैर्वीजेत् । ततश्च प्राणायामं श्वाससरोधं कारयेत् ॥

पृष्ठपार्श्वोदरं मृद्यात् करैरुष्णैरधोमुखम् ।
केशेपूत्क्षिप्य धून्वीत भाययेद्व्याळदंष्ट्रिभिः ॥
शस्त्रोल्काराजपुरुषैर्वस्तिरेति तथा ह्यधः ।

उष्णैश्च करैरधोमुखमातुरस्य पृष्ठादिकं मृद्यात् । तं च केशेपूत्क्षिप्य धून्वीत । व्याळादिभिश्च भाययेत् । तथा ह्यूर्ध्वं प्रवर्तमानो वस्तिरध एवैति ॥

पाणिवस्त्रैर्गळापीडं कुर्यान्न म्रियते यथा ॥
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ।
अपानः पवनो वस्तिं तमाश्वेवापकर्षति ॥

तस्य च मरणं रक्षन् पाण्यादिभिर्गळापीडं कुर्यात् । एवं हि प्राणस्योदानस्य च निरोधादपानः सुप्रसिद्धतरमार्गः संस्तं वस्तिमाश्वेवापकर्षति ॥

कुष्ठक्रमुककल्कं च पाययेदम्लसंयुतम् ।
औष्ण्यात्तैक्ष्ण्यात् सरत्वाच्च वस्तिंसोस्यानुलोमयेत् ॥
गोमूत्रेण त्रिवृत्पथ्याकल्कं वाधोनुलोऽमनम् ।

तं च कुष्ठक्रमुकयोः कल्कमम्लेन काञ्जिकादिना पाययेत् । क्रमुकं लोध्रम् । स कल्कोऽस्यातुरस्यौष्ण्यादिना वस्तिमूर्ध्वं प्रवर्तमानमधोऽनुलोमयेत् । अथवा त्रिवृत्पथ्याकल्कं गोमूत्रेण पाययेत् ॥

पक्वाशयास्थिते स्विन्ने निरूहो दाशमूलिकः ॥
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ।
वस्तिर्गोमूत्रसिद्धैर्वा सामृतावंशपल्लवैः ॥
पूतीकरञ्जत्वक्पत्रषडीदेवाह्वरोहिषैः ।
सतैलगुळसिन्धूत्थोविरेकौषधकल्कवान ॥

पक्वाशयस्थे वस्तौ स्विन्ने पुरुषे दाशमूलिको निरूहो विधेयः । यवादिभिश्च मूत्रसाधितैर्वस्तिर्विधेयः । अथवा पूतीकरञ्जादिभिरमृतावंशपल्लवाभ्यां युक्तः सतैलादिको विरेचनद्रव्यकल्कवान् वस्तिर्विधेयः ॥

विल्वादिपञ्चमूलेन सिद्धो वस्तिरुरस्थिते ।
शिरस्थे नावनं धूमः प्रच्छायं सर्षपैः शिरः ॥

उरस्थिते वस्तौ विल्वादिपञ्चमूलेन सिद्धो वस्तिर्विधेयः । शिरःप्राप्ते वस्तौ नावनादिकम् । इत्युक्ताः षडयोगापदः ॥

वस्तिरित्यादिनातियोगापद उच्यन्ते ॥

वस्तिरत्युष्णतीक्ष्णाम्लघनोऽति स्वेदितस्य वा
अल्पदोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ॥
अतियोगत्वमापन्नः कुक्षिशूलकरो भवेत् ।
विरेचनातियोगेन स तुल्याकृतिसाधनः ॥

उष्णादिगुणवान् वस्तिः प्रयुक्तोऽतिस्वेदितस्य वा प्रयुक्तः अल्पदोषादिके वा पुनः पुनः प्रयुक्तोऽतियोगमापन्नः सन् कुक्षिरुजाकरो भवेत् । सोऽतियोगो विरेचनातियोगेन तुल्यलक्षणस्तुल्यसाधनश्च ॥

पृश्निपर्णीं स्थिरां पद्मं काश्मर्यं मधुकोत्पले ।
पिष्ट्वा द्राक्षां मधूकं च क्षीरे तण्डुलधावने ॥
द्राक्षायाः पक्वलोष्ट्रस्य प्रसादे मधुकस्य वा ।
विनीय सघृतं वस्तिं युञ्ज्याद्दाहेऽतियोगजे॥

वस्त्यातियोगजदाहे पृश्निपर्ण्यादिकं पिष्ट्वा क्षीरादीनामन्यतमे विनीय निक्षिप्य सघृतं वस्तिं युञ्ज्यादित्युक्तं कुक्षिशूलम् ॥

स्नेहेत्यादिनङ्गरुगुच्यते ॥

स्नेहस्वेदैरसंपाद्य गुरुतीक्ष्णोऽतिमात्रकः ।
दुस्थिताय प्रणिहितो वस्तिर्दुःशोधिताय वा॥

अतिप्रवृत्तो मरुतं कोपयेत् सविमार्गगः ।
करोत्यङ्गरुजां जृम्भां स्तम्भं भेदं च पर्वणाम्

स्नेहस्वेदाभ्यामसंपाद्यानिष्पन्नं कृत्वा गुर्वादिको वस्तिरतियोगप्रवृत्तः सन् मरुतं कोपयेत् । स कुपितो मरुद्विमार्गगतः सन्नङ्गरुजादिकं करोति । अन्यस्मै दुस्थिताय शय्यायां प्रणिहितो वा एवं करोति । दुःशोधिताय वा ॥

तं तैललवणाभ्यक्तं स्वेदितं प्रस्तरादिभिः ।
विल्वकोलयवैरण्डवर्षाभूबृहतीद्वयैः ॥
सकुलत्थैः शृतं मस्तु फलसौवीरकान्वितैः ।
आस्थापयेत् ससिन्धूत्थैर्जाङ्गलैराशितं रसैः ॥
तैलेनानिलजिद्द्रव्यविपक्वेनानुवासयेत् ।

तमतियोगिनं तैललवणाभ्यामभ्यक्तं प्रस्तरादिभिश्च स्वेदविध्युक्तैः स्वेदितं विल्वादिभिर्मस्त्वाद्यन्वितैः शृतैः ससिन्धूत्थैश्चास्थापयेत् । अनु च जाङ्गलैरसैराशितं भोजितं वातहरद्रव्यासिद्धेन तैलेनानुवासयेदित्युक्ताङ्गरुक् ॥

मृदुकोष्ठ इत्यादिना हिध्मोच्यते ॥

मृदुकोष्ठेऽबले वस्तिरतितीक्ष्णोऽतिनिर्हरन् ॥
कुर्याद्धिध्मां हितं तत्र हिध्माघ्नं बृंहणं च यत्

मृदुकोष्ठबलरहितादिकेऽतितीक्ष्णो वस्तिरतिनिर्हरन् दोषं हिध्मां कुर्यात् । तत्र हिध्माचिकित्सितमन्यत् बृंहणं च हितम् ॥

बलाबृहत्यादिवराकाष्मर्यफलसैन्धवैः ॥
सप्रसन्नारनालाम्लैस्तैलं पक्त्वानुवासयेत् ।
उष्णाम्बुनाक्षं पिप्पल्या दद्याल्लवणसंयुतम् ॥
धूमलेहरसक्षीरस्वेदांश्चान्नं च वातजित् ।

ततो बलाबृहत्यादिभिः प्रसन्नादिभिश्च तैलं पक्त्वानुवासयेत् । बृहत्यादि लघुपञ्चमूलम् । आरनालाम्लमम्लारनालम् । अक्षं कर्षं पिप्पल्याः लवणेन युक्तमुष्णाम्बुना दद्यात् । धूमादींश्च वातनुदन्नं च दद्यात् । इत्युक्ता हिध्मा ॥

अतितीक्ष्ण इत्यादिना हृत्पीडोच्यते ॥

अतितीक्ष्णः सवातो वानवासम्यक्प्रपीडितः ॥
घट्टयेद्धृदयं वस्तिस्तत्र काशकुशोत्कटैः ।
स्यात् साम्ललवणस्कन्धकरीरबदरीनलैः ॥
शृतैर्वस्तिर्हितः सिद्धो वातघ्नैश्चानुवासनम् ।

अतितीक्ष्णादिगुणो वस्तिर्हृदयं घट्टयेत् । सवातो वा वस्तिर्यो निःशेषपीडितः स च । तत्र हृदयघट्टनेऽम्लस्कन्धलवणस्कन्धादिभिः काशादिभिश्च सिद्धो वस्तिर्हितः स्यात् । वातघ्नैश्च स्नेहैरनुवासनं स्यात् । इत्युक्ता हृत्पीडा ॥

मृदुकोष्ठ इत्यादिना परिकर्तनमुच्यते ॥

मृदुकोष्ठाल्पदोषस्य रूक्षतीक्ष्णातिमात्रकः ॥
हृत्वा वस्तिर्मलाञ्छीघ्रं वातपित्ते प्रकोपयेत् ।
नाभिवस्तिगुदांस्ते हि कृन्ततोऽस्य मुहुर्मुहुः ॥
विवर्णाल्पाल्पमुत्थानं वस्तिनिर्लेखनाद्भवेत् ।

मृदुकोष्ठत्वादियुक्तस्य रूक्षादिगुणो वस्तिर्मलान् हृत्वा शीघ्रं वातपित्ते प्रकोपयेत् ।

अस्य चातुरस्य ते वातपित्ते नाभ्यादीन् मुहुर्मुहुः कृन्ततः । वस्तेश्च मूत्राधारस्य निर्लेखनाद्विवर्णादिगुणमुत्थानं भवेत् ॥

स्वादुशीतौषधैस्तत्र पयस्येक्ष्वादिभिः शृतः ॥
यष्ट्याह्वतिलकल्केनवस्तिःस्यात्क्षीरभोजिन
ससर्जरसयष्ट्याह्वं जिङ्गिणीकर्दमाञ्जनम् ।
विनीय दुग्धे वस्तिः स्याद्व्यक्ताम्लरसभोजिनः
पिच्छिलश्च हितो वस्तिः स्नेहश्च मधुरैः शृतः

तत्र पयस्यादिभिः स्वादुशीतैः शृतो यष्ट्याह्वतिलयोः कल्केन युक्तो वस्तिः क्षीरभोजिनः पुरुषस्य स्यात् । जिङ्गिण्यादिकं ससर्जरसादिदुग्धे विनीय वस्तिः स्यात् । अम्लोऽत्कटं मांसरसं यो भुङ्क्ते तस्य पिच्छिलो वस्ति कल्पोक्तो वस्तिश्च हितः । मधुरैश्च शृतः स्नेहोऽनुवासने हितः । इत्युक्तं कर्तनम् ॥

वस्तिरित्यादिना परिस्रव उच्यते ॥

बस्तिःक्षाराम्लतीक्ष्णोष्णलवणःपैत्तिकस्य वा
गुदं लिखन् दहन् क्षिण्वन् करोत्यस्रपरिस्रवम्
स विदग्धं स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः ॥
बहुशश्चातियोगेन मोहं गच्छति चासकृत् ॥

अथवा पैत्तिकस्य क्षारादिगुणो वस्तिर्गुददाहादिकं कुर्वन्नस्रपरिस्रवं करोति । स परिस्रववान् विदग्धमसृग्बहुभिर्वर्णैः स्रवति । पित्तं च तथाविधमनेकवर्णं स्रवत्यतियोगेन । असकृच्चासौ मोहं गच्छति ॥

तत्रार्द्रैः शल्मलीपत्रैः क्षुण्णैराजं पयः शृतम् ।
पूतं घृतान्वितं वस्तिं दद्यादन्यांश्च पिच्छिलान्
वटादिपल्लवेष्वेवं कल्पो यवतिलेषु च ।
सुवर्चलोपोदकयोः कच्छुदारे च शस्यते ॥

तत्रार्द्रैः शल्मलीपत्रैः शृतं पयः पूतं घृतान्वितं च वस्तिं दद्यात् । अन्यांश्च पूर्वोक्तान् पिच्छिलान् वस्तीन दद्यात् । एष च शल्मलीपत्रकल्पो वटादिपल्लवेषु यवतिलानां पल्लवेष्वपीष्टः सुवर्चलादीनां च शस्यते ॥

गुदे च शीतमधुरान् कुर्यात् सेकप्रलेपनान् ।
रक्तपित्तातिसारघ्नी क्रिया चात्र प्रशस्यते ॥

गुदे च शीतादिगुणान् सेकान् प्रलेपांश्च कुर्यात् । अत्र च रक्तपित्तघ्नी क्रिया शस्यते रक्तातिसारघ्नी च ॥

दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत्
तद्धि पित्तशकृद्वातानहत्वादाहादिकान्जयेत् ॥

दाहादिषु द्राक्षामृदितवारिणा त्रिवृत्कल्कं पिबेत् । तत् त्रिवृत्कल्कयुक्तं मृद्वीकावारि पित्तादीन् हत्वा दाहादिकान् जयेत् ॥

विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम् ।
युञ्ज्याद्वातिविरिक्तस्यक्षीणविट्कस्यभोजनम्
माषयूषेण कुल्माषान् पानं दध्यथवा सुराम् ॥

तेन च विशुद्धो यवागूं शर्करायुतां पिबेत् । अथवा योऽतिविरिक्ततया क्षीणविट्कस्तस्य माषयूषेण भोजनं युञ्ज्यात् । कुल्माषान् वा युञ्ज्यात् । कुल्माषः स्विन्नसस्यम् ।

पानं तु दधि वा सुरां वा युञ्ज्यात् । इत्युक्ताः षडतियोगापदः ॥

आमं यः कुणपं रुग्वानुपवेश्येत सारुचिः ।
स घनातिविषाकुष्ठनतदारुवचाः पिबेत् ॥

यस्तु पुरुषो रुग्वानामं कुणपं दुर्गन्धमुपवेश्येतारुच्या युक्तः स घनादिकं जलेन पिबेत् ॥

शकृद्वातमसृक् पित्तं कफं वा योऽतिसार्यते ।
पक्वं तत्र स्ववर्गीयो वस्तिः श्रेष्ठो भिषग्जितम् ॥

अस्मिंश्चातियोगे शकृदादिकं पक्वं योऽतिसार्यते तत्र स्ववर्गीय आत्मीयौषधनिर्वृत्तो वस्तिः श्रेष्ठं भिषग्जितम् । शकृदतिसारे सूत्रोक्तेन पुरीषसंग्रहणेन वर्गेण वस्तिः । एवं वातादीनामपि स्वशब्दार्थो व्याख्येयः ॥

षण्णामेषां द्विसंसर्गात्त्रिंशद्भेदा भवन्ति तु ।
केवलैः सह षट्त्रिंशद्विद्यात् सोपद्रवांश्च तान् ॥
शूलप्रवाहिकाध्मानपरिकर्तारुचिज्वरान् ।
तृण्मोहदाहमूर्छादींश्चैषां विद्यादुपद्रवान् ॥

एषां चामादीनां षण्णां द्विसंसर्गात् द्विसंयोगेन त्रिंशत् भेदा भवन्ति । केवलैश्चामादिभिः षडेवं षट्त्रिंशदतीसारभेदानुपद्रवैः सह भिषग्विद्यात् । तत्रामादिभिर्मिश्रिताः ॥ सामं शकृत् सामवायुस्तथा सामं च लोहितम् । आमेन संयुतं पित्तं कफः सामस्तथैव च ॥ शकृद्वातः शकृदसृक् शकृत्पित्तं शकृत्कफः । वातरक्तं वातपित्तं तथा वातकफं विदुः ॥ असृक्पित्तं रक्तकफं पित्तं सकफमेव च । इत्येकस्य प्राधान्येन पञ्चदश । अन्यस्य प्राधान्येन च पञ्चदश । तद्यथा ॥ शकृदामः सवातामः शोणितामस्तथापरः । पित्तामश्च बलासामोवताविट्कविट् तथा ॥ पित्तविट् कफविट् चैव रक्तवातस्तथापरः । पित्तवातः कफमरुत् पित्तेनासृक्कफेन च ॥ कफपित्तमिति त्रिंशद्भेदाः षट्केवलैस्तथा । अथ तेषामुपद्रवानाह । शूलेत्यादि यथासंभवं योज्यम् । आदिशब्द एवंजातीयग्रहणार्थः ॥

तत्रेत्यादिना षट्त्रिंशतश्चिकित्सा ॥

तत्रामेऽन्तरपानं तु कट्वम्ललवणैर्युतम् ।
पाचनं शस्यते वस्तिरामे हि प्रतिषिध्यते ॥
वातघ्नग्राहिवर्गीयो वस्तिः शकृति शस्यते ।
स्वाद्वम्लोऽव्यक्तलवणः स्नेहवस्तिः समीरणे ॥
रक्ते रक्तेन पित्ते तु कषायस्वादुतिक्तकः ।
सार्यमाणे कफे वस्तिः कषायकटुतिक्तकः ।

आमे केवले कट्वादिगुणैरौषधैर्युक्तमन्तरपानकं मुखेन योज्यं शस्यते । किं तदाह पाचनम । यत आमे वस्तिः प्रतिषिध्यते । केवले शकृति वातघ्नवर्गसिद्धो वा वस्तिः संग्रहणसिद्धो वा । केवले समीरणे स्नेहवस्तिर्यः स्वाद्वम्लः प्रभूतलवणश्च । केवले रक्ते कषायादिगुणो वस्तिः । तथाविध एव पित्तप्रधाने रक्तपित्ते । केवले कफे सार्यमाणेऽतिसार्यते कषायकटुतिक्तको वस्तिः ॥

**शकृता वायुना वामे तेन वर्चसि वानिले ।**
**संसृष्टेऽन्तरपानं स्यात् कट्वम्ललवणैर्युतम् ॥**

आमप्रधाने शकृति शकृदामे अन्तरपानकं मुखयोज्यं कट्वादिगुणद्रव्ययुक्तम् । वायुना वा युक्ते प्रधान आमे तदेव । तेन चामेन युक्ते प्रधाने वर्चसि तदेव । तेन वामेन युक्ते प्रधानेनिले तदेव ॥

**पित्तेनामेऽसृजा तद्वत् तयोरामेन वा पुनः ।**
**संसृष्टयोर्भवेत् पानं सकटुस्वादुतिक्तकम् ॥**

पित्तेन युक्ते प्रधान आमे तद्वत् । तद्वदिति कट्वम्ललवणैर्युक्तमन्तरपानम् । असृजा युक्ते प्रधान आमे तद्वदेव । तयोः पित्तासृजोरामेन संसृष्टयोः सकटुस्वादुतिक्तकं पानं भवेत । तेन पित्तप्रधानमामपित्तमुक्तम् । रक्तप्रधानं चामरक्तम् ॥

**तथामे कफसंसृष्टे कषायकटुतिक्तकम् ।**
**आमेन तु कफे युक्ते कषायलवणोषणम् ॥**

कफसंसृष्टे प्रधान आमे कषायादिगुणद्रव्ययुक्तमन्तरपानम् । आमेन युक्ते प्रधाने कफे कषायलवणोषणमन्तरपानम् ॥

**वातेन विशि पित्ते वा विट्पित्तास्रैस्तथानिले**
**स्यात् कषायाम्लमधुरः संसृष्टे वस्तिरुत्तमः ॥**
**वस्तिर्वातेन रक्ते तु कार्यः स्वाद्वम्लतिक्तकः ।**

वातेन संसृष्टे प्रधाने शकृति कषायादिगुणो वस्तिरुत्तमः स्यात् । वातेन संसृष्टे प्रधाने पित्ते स एव वस्तिः । विडा च संसृष्टे प्रधाने स एव । पित्तेन च संसृष्टे प्रधानेऽनिले स एव । अस्रेण च संसृष्टे प्रधानेऽनिले स एव । वातेन संसृष्टे प्रधाने रक्ते स्वाद्वादिगुणो वस्तिः कार्यः ॥

**शकृच्छोणितयोः पित्तशकृतोरस्रपित्तयोः ।**
**वस्तिरन्योन्यसंसर्गे कषायस्वादुतिक्तकः ॥**

शकृच्छोणितयोरन्योन्यसंसर्गे शकृत्प्राधान्ये वा शोणितप्राधान्ये वा कषायादिगुणो वस्तिः कार्यः । एवं पित्तशकृतोरप्यन्योन्यसंसर्गे पित्तप्राधान्ये शकृत्प्राधान्ये च कषायादिगुणः । रक्तपित्तयोरपि रक्तप्राधान्ये पित्तप्राधान्ये च ॥

**कफेन विशि पित्ते वा कफे विट्पित्तशोणितैः**
**कटुतिक्तकषायः स्यात् संसृष्टे वस्तिरुत्तमः ॥**

कफेन युक्ते प्रधाने शकृति कट्वादिगुणो वस्तिरुत्तमः स्यात् । कफेन संसृष्टे पित्ते स एव । विशा पित्तेन रक्तेन च संसृष्टे प्रधाने कफे स एव ॥

**मधुरोषणतिक्तस्तु रक्ते कफविमूर्छिते ।**
**मारुते कफसंसृष्टे कट्वम्ललवणो भवेत् ॥**
**स्याद्वस्तिः कटुतिक्ताम्लः संसृष्टे वायुना कफे**

कफेन विमूर्छिते संसृष्टे प्रधाने रक्ते मधुरादिगुणो वस्तिः । कफेन संसृष्टे मारुते कट्वादिगुणो वस्तिर्भवेत् । वायुना संसृष्टे प्रधाने कफे कट्वादिगुणो वस्तिः स्यात् । इति षट्त्रिंशतो भेदानां चिकित्सोक्ता ॥

त्रिचतुःपञ्चषड्योगानेवमेव विकल्पयेत् ॥
युक्तिश्चैषातिसारोक्ता सर्वरोगेष्वपिस्मृता ।

अनया द्विसंसर्गयुक्त्या त्र्यादिसंसर्गेष्वपि यथास्वं त्र्यादिसङ्ख्यायोगान् विकल्पयेत् । न केवलमतिसारेष्वेवैतद्यथाविधिविषयं रसयोजनं बोद्धव्यं यावत् सर्वरोगेष्वपि आमादिकृतेष्वेतदेव संयोजनं यथाविषयं बोद्धव्यम् ॥

युगपत् षड्रसं षण्णां संसर्गे पाचनं भवेत् ।
निरामाणां तु पञ्चानां वस्तिः षड्रसिको हितः

सर्वेषु चातिसारादिषु रोगेषु षण्णामामादीनां युगपत् षट्त्रिंशं यथोक्तं पाचनमिष्यते । यदा त्वामादिना जातानां शकृदादीनां पञ्चानां युगपत् संसर्गस्तदा षड्रसयुक्त एव वस्तिः ॥

उदुम्बरशलाटूनि जम्ब्वाम्रोदुम्बरत्वचः ।
शङ्खं सर्जरसं लाक्षां कर्तृणं च पलांशिकम् ॥
पिष्ट्वा तैः सर्पिषः प्रस्थं क्षीरद्विगुणितं पचेत्
अतीसारेषु सर्वेषु पेयमेतद्यथाबलम् ॥

उदुम्बरशलाट्वादीनां क्षीराद्विप्रस्थेन युक्तं सर्पिषः प्रस्थं विपचेत् । मात्रया यथाबलं पेयं सर्वेष्वतिसारेषु । तदिति सर्पिः । शलाटुरभिनवं फलम् । त्वक्छब्देन जम्ब्वादीनां संबन्धः । कर्तृणं भूतीकम् ॥

कच्छुराधातकीबिल्वसमङ्गारक्तमूलिभिः ।
मसूराश्वत्थशुङ्गैश्च यवागूः स्याज्जले शृतैः ॥
बालोदुम्बरकट्वङ्गसमङ्गाप्लक्षपल्लवैः ।
मसूरधातकीपुष्पबलाभिश्च तथा भवेत् ॥

कच्छुरादिभिर्जले शृतैर्यवागूः स्यात् । कच्छुरा दुरालभा । समङ्गा मञ्जिष्ठा । रक्तमूली शमीपत्राख्या । समङ्गाबालोदुम्बरादिभिश्च यवागूर्भवेत् । तथेति जले शृतैः । कट्वङ्गः श्योनाकः ॥

उपसंहरन्नाह

नानाप्रकारा जायन्ते व्यापदो वस्तिविभ्रमात्
यथायथं यथावस्थं तासां कुर्वीत साधनम् ॥
इति कल्पस्थाने षष्ठोऽध्यायः ॥

वस्तिविभ्रमादसम्यग्योगान्नानाप्रकारा व्यापदो जायन्ते । तासां व्यापदां यथायथं यथास्वरूपं यथावस्थं च साधनं चिकित्सितं कुर्वीतेति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां कल्पस्थाने षष्ठोऽध्यायः ॥

---

# सप्तमोऽध्यायः ।

आस्थापनानां व्यापदस्तत्साधनं चोक्त्वा क्रमप्राप्तानां स्नेहादिवस्तीनामसम्यग्योगे व्यापदः साधनं च प्रदर्शयितुमध्याय आरभ्यते ॥

अथातः स्नेहादिव्यापत्सिद्धिं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

स्नेहवस्तौ मरुत्पित्तकफात्याशविडावृते ।
अभुक्ते शूनपाय्वामदत्तेऽष्टौ व्यापदः स्मृताः ॥

स्नेहवस्तौ मरुदादिपञ्चकावृते अभुक्तादित्रयदत्ते चेत्यष्टधा स्नेहवस्तेर्व्यापदः । अत्यागोऽतिभोजनम् ॥

शीत इत्यादिना क्रमणावरणा उच्यन्ते ॥

शीतोऽल्पो वाधिके वाते पित्तेत्युष्णः कफे मृदुः
अतिभुक्ते गुरुर्वर्चःसंचयेल्पबलस्तथा ॥
दत्तस्तैरावृतः स्नेहो नायात्यभिभवादपि ।

वातेधिके शीतोऽल्पो वा दत्तो वातेनावृतत्वान्नायाति ; पित्तेऽधिकेऽत्युष्णो दत्तः पित्तावृतत्वान्नायाति । कफेऽधिके मृदुः स्नेहवस्तिः कफावृतत्वान्नायाति । अतिभुक्ते गुरुः स्नेहवास्तिरन्नावृतत्वान्नायाति । वर्चःसंचयेऽल्पबलः स्नेहवस्तिर्विडावृतत्वान्नायाति । सम्यक्प्रयुक्तोऽपि च स्नेहवस्तिर्मारुतादिष्वधिकेषु प्रयुक्तस्तैरभिभूतत्वान्नायाति ॥

स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः ।
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ॥
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः
सौवीरकसुराकोलकुलत्थयवसाधितैः ॥
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पाञ्चमूलिकैः ।
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत्

स्तम्भादिकं वातावृतस्नेहलक्षणम् । तं स्नेहं स्निग्धादिगुणैः पाञ्चमूलिकैर्निर्हरेत् । रास्नातैलादियुक्तैश्च । पीतद्रुरत्र सरलः । कोलं बदरम् । ताभ्यामेव तैलाभ्यां रास्नापीतद्रुतैलाभ्यां सायं भुक्ते भोजने कृतेऽनुवासयेत् ॥

तृड्दाहरागसंमोहवैवर्ण्यतमकज्वरैः ।
विद्यात् पित्तावृतं स्वादुतिक्तैस्तं वस्तिभिर्हरेत्

तृडादि पित्तावृतलक्षणम् । तं स्नेहं स्वाद्वादिगुणैर्वस्तिभिर्हरेत् ॥

तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ।
समूर्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम्
कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः ।
फलतैलयुतैः साम्लैर्वस्तिभिस्तं विनिर्हरेत् ॥

तन्द्रादिकं श्लेष्मावृतलक्षणम् । तं स्नेहं कषायादिगुणैर्वस्तिभिर्हरेत् ॥

छर्दिमूर्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ।
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ॥
कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ।
मृदुर्विरेकः सर्वं च तत्रामविहितं हितम् ॥

छर्द्यादिकमत्यशनावृतलक्षणम् । आमलिङ्गानि स्रोतोरोधादीनि सूत्रोक्तानि । तत्र कटुकादिगुणानां द्रव्याणां क्वाथैश्चूर्णैश्च पाचनम् । मृदुर्विरेकश्च शस्यते । सर्वमामविहितमामातिसाराद्युक्तम् ॥

विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ।
स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवस्तिभिः
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ।
निर्हरेद्विधिना सम्यगुदावर्तहरेण च ॥

विट्सङ्गादिना विडावृतलक्षणम् । तं स्नेहं स्नेहस्वेदादिभिर्निर्हरेदुदावर्तोक्तेन च विधिना सम्यग्योजनया निर्हरेदित्यावरणा उक्ताः ॥

अभुक्ते शूनपायोर्वा पेयामात्राशितस्य वा ।
गुदे प्रणिहितः स्नेहो वेगाद्धावत्यनावृतः ॥
ऊर्ध्वकायं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि

अभुक्ते दत्तः स्नेहः पेयामात्रेणैव भुक्तस्य वा दत्तः शूनपायोर्वा प्रणिहितो वेगादूर्ध्वकायं धावत्यन्नाद्यावारकाभावात् । नतः कण्ठादूर्ध्वेभ्यः खेभ्यो नासादिभ्य एत्यागच्छति ॥

मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ॥
तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ।
कण्ठादागच्छतस्तम्भकण्ठग्रहविरेचनैः ॥
छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निवर्तनम् ।

तत्र मूत्रादिसिद्धो निरूहो यवादिमांश्च तत्सिद्धेन मूत्रादिसिद्धेन तैलेन युक्तो देयः स्यात् । अनुवासनश्च तथाविधो देयः स्यात् । तस्य चोर्ध्वप्रवृत्तस्य स्नेहस्य कण्ठादागच्छतो निवर्तनमधोनयनं स्तम्भादिभिः कुर्यात् ॥

आमदत्त उच्यते ॥

नापक्वं प्रणयेत् स्नेहं गुदं स ह्युपलिम्पति ।
ततः कुर्यात् सरुङ्मोहकण्डूशोफान् क्रियात्र च
तीक्ष्णो वस्तिस्तथा तैलमर्कपत्ररसे शृतम् ।

अपक्वं स्नेहं पायौ न प्रणयेत् । स ह्यपक्वः प्रणिहित आत्मना गुदमुपलिम्पति । स चामदत्तो रुगादीन् कुर्यात् । अत्र च क्रिया चिकित्सा भवति । किमित्याह तीक्ष्ण इत्यादि सुबोधम् । इत्युक्ता अष्टौ व्यापदः ॥

प्रसङ्गेनोच्यते ॥

ह्रस्वं दीर्घं तनु स्थूलं जीर्णं शिथिलबन्धनम्
पार्श्वच्छिद्रं तथा वक्रमष्टौ नेत्राणि वर्जयेत् ।
अप्राप्त्यतिगतिक्षोभकर्षणक्षणनस्रवाः ॥
गुदपीडा गतिर्जिह्मा तेषां दोषा यथाक्रमम् ।

ह्रस्व इत्यादि । सर्वत्र च वस्तौ ह्रस्वादिगुणं नेत्रं वर्जयेत् अप्राप्त्यादिदोषभयात् । ह्रस्वे नेत्रे वस्तेः स्थानाप्राप्तिः । दीर्घेऽन्तरतिगमनमौषधस्य । तनौ नेत्रेऽन्तःक्षोभः । स्थूले मार्गकर्षणम् । जीर्णे जर्जरे कर्कशत्वात् गुदादिक्षणनम् । शिथिलबन्धने बहिरौषधस्य स्रवः । पार्श्वच्छिद्रे नेत्रे गुदपीडा । वक्रे जिह्मा अस्पष्टा गतिरौषधस्येति यथाक्रमम् ॥

मांसलस्निग्धविषमजालवत्स्थूलवातलाः ।
छिन्नः क्लिन्नश्च तानष्टौ वस्तीन् कर्मसु वर्जयेत्
गतिवैषम्यदौर्गन्ध्यजिह्मत्वस्रुतिदुर्ग्रहाः ।
फेनिलच्युत्यधार्यत्वं वस्तेः स्युर्वस्तिदोषतः ॥

मांसलादीन् वस्तीन् नेत्रमूलयोज्यानौषधाधारानष्टौ वस्तिकर्मणि वर्जयेत् । यतो स्यान्मांसलत्वादित्वाद्वस्तिदोषतो वस्तेरौषधस्य गतिवैषम्यादयः स्युः । मांसलत्वेन वस्तेरौषधस्य विषमा गतिः स्निग्धत्वेन वस्तिचर्मण औषधस्य दौर्गन्ध्यम् । विषमत्वेन वस्तेर्घनत्वम् । तनुत्वेनौषधस्य जिह्मत्वं यन्त्रादनिर्गमनम् । जालवत्वेन सिराजालत्वेन स्रुतिः । स्थूलत्वेन वस्तेश्चर्मण औषधस्य दुःखेन ग्रहणम् । वातलत्वेन चर्मण औषधस्य

केनिलत्वं छिन्नत्वेनौषधस्य च्युतिः । छिन्नत्वेन बस्तेरौषधं धारयितुमशक्यत्वमिति ॥

उच्चकैरत्यवाक्छीर्षे न्युब्जं संकुचितं स्थितम्
उत्तानं दक्षिणं पार्श्वं सप्त शय्याः परित्यजेत्
मूत्राघातोऽतिसंप्राप्तिरप्राप्तिः साधुनागतिः ।
आश्वागतिर्मरुत्कोपस्तृप्तिः पक्वाशयस्य च ॥
तद्दोषा स्युर्विधातव्यं यथौपयिकमत्र च ।

उच्चकैरित्यादिना सप्त शय्या बस्तिकर्मणि परित्यजेत् । क्रमेण मूत्राघातादिसप्तदोषभयात् । उच्चकैरित्युच्छ्रिता शय्या पूर्वभागे । एवं हि मूत्राघातः । अवाक्शिरस्त्वेनौषधस्यातिसंप्राप्तिः । न्युब्जत्वेनावाङ्मुखत्वेनौषधस्य स्थानाप्राप्तिः । सङ्कुचिताङ्गत्वेन साधुना मार्गेणौषधस्यानागतिः । अथवा साधु कृत्वा गमनं न भवति । स्थिते निषण्ण उपविष्ट आशु शीघ्रं बस्तेः प्रतिनिवर्तनं उत्ताने मरुत्कोपः । दक्षिणपार्श्वेन स्थितस्य पक्वाशयस्य तृप्तिः । अत्र शय्यादोषेषु सर्वेषु हि नेत्रादिदोषेषु च यथौपायिकं यथोपयोगि चिकित्सितं विधातव्यम् ॥

सवातातिद्रुतोत्क्षिप्ततिर्यगुल्लुप्तकम्पिताः ।
अतिमन्दकबाह्यातिवेगदोषाः प्रणेतृतः ॥

सवातादयो दश दोषाः प्रणेतृतो बस्तियोजकादुत्पद्यन्ते । उल्लुप्तः उन्मुक्तः ॥

अनुच्छ्वास्य तु बद्धे वा दत्ते निःशेष एव वा
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ॥
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ।

अनुच्छ्वास्य बन्धादिना बस्तावन्तर्वायुः क्षुभितस्तत्कालं शूलतोदकरो भवेत् । तत्र वातेन सशूलादिके अभ्यङ्गादिकं योज्यम् ॥

द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात् कटीगुदजङ्घोरुबस्तिस्तम्भार्तिभेदनम्
भोजनं तत्र वातघ्नं स्वेदाभ्यङ्गाः सबस्तयः ।

अतिद्रुतं नेत्रे प्रणीते वा निष्कृष्टे वा कटिस्तम्भादिकं स्यात् । तथा सहसा झटित्युत्क्षिप्ते नेत्रे कटिस्तम्भादिकं स्यात् । उभयत्रापि वातघ्नभोजनादिकमौषधम् ॥

तिर्यग्वल्या वृते द्वारे बद्धे वापि न गच्छति ॥
नेत्रे तदृजु निष्कृष्य संशोध्य च पुनर्नयेत् ।

तिर्यक्प्रणिहिते नेत्रे नेत्रद्वारे यदा बल्यावृतत्वादौषधमन्तर्न गच्छति तिर्यग्वा बद्धे बस्तावेवं भवति । बद्धं रुद्धमार्गं नेत्रम् । उभयत्रापि तं नेत्रं ऋजु कृत्वा यथैव प्रविष्टं तथैव निष्कृष्य संशोध्य च पुनर्गुदं नयेन्नेत्रम् ॥

पीड्यमानेऽन्तरामुक्ते गुदे प्रतिहतोऽनिलः ॥
उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली ।
बस्तिःस्याचत्रबिल्वादिःफलश्यामादिमूत्रवान्

पीड्यमानो बस्तिर्यदान्तरा शिथिलहस्तत्वादुन्मुक्तो भवति तदा तेनौषधेन प्रतिहतोऽनिलो बलवानुरोरुजादिकं जनयेत् । तत्र बिल्वादिपञ्चमूलमदनफलश्यामादिगणवान् बस्तिः स्यात् ॥

स्याद्दाहो दवथुः शोफः कम्पेनाभिहते गुदे ।
कषायमधुराः शीताः सेकास्तत्र सवस्तयः ॥

नेत्रस्य कम्पेन गुदेऽभिहते दाहादिकं स्यात् । तत्र कषायादिगुणाः सेकाश्च वस्तयश्च हिताः ॥

अतिमात्रप्रणीतेन नेत्रेण क्षणनाद्वलेः ।
स्यात् सार्तिदाहनिस्तोदगुरुवर्चःप्रवर्तनम् ॥
तत्र सर्पिःपिचुः क्षीरं पिच्छावस्तिश्च शस्यते ।

नेत्रस्यातिमात्रप्रणयनेन वलेः क्षणनात् सार्त्यादिवर्चःप्रवर्तनं स्यात् । तत्र च सर्पिरादिकं शस्यते ॥

न भावयति मन्दस्तु बाह्यश्चाशु निवर्तते ।
स्नेहस्तत्र पुनः सम्यक् प्रणेयः सिद्धिमिच्छता

मन्दपीडितस्तु स्नेहो न भावयति देहं । बाह्यो स्नेह आशु निवर्तते । स्तोकप्रविष्टे नेत्रे बाह्यः । तत्र मन्दे बाह्ये च सिद्धिमिच्छता भिषजा पुनःस्नेहः प्रणेयः ॥

अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गळम् ।
तत्र वस्तिर्विरेकश्च गळपीडादिकर्म च ॥

अतिपीडितस्त्वतिप्रवृत्तः कोष्ठे तिष्ठत्यथवा गळमायाति । तत्र वस्त्यादिकं कर्म ॥

शोधनप्रसङ्गेनोच्यते ॥

वमनाद्यैर्विशुद्धं च क्षामदेहबलानलम् ।
यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ॥

भिषक् प्रयत्नतो रक्षेत् सर्वस्मादपचारतः ।

वमनाद्यैः कर्मभिः सर्वैरपि विशुद्धं देहं क्षामबलादिकं च सर्वापचारेभ्यो भिषक् प्रयत्नतो रक्षेत् । यथा तरुणमसंजातविहगशावमण्डं यत्नतो रक्षेत् । तैलेन पूर्णं वा पात्रमिति ॥

दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ।
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥

तथाविधाय च मधुराणि हृद्यानि चाहारादीनि दद्यात् । ततः क्रमेणाम्ललवणौ । ततः क्रमेण स्वादुतिक्तौ । ततः कषायकटुकौ ॥

तं च शुद्धं क्षाममेवं प्रकृतिं स्वास्थ्यं नयेत् कथमित्याह ॥

अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ।
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ॥
सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ।

अन्योन्यप्रत्यनीकानां परस्परप्रतिपक्षाणां मधुरकटुकादीनां रसानां व्यत्यासाद्विपर्यासादुपयोगेन । सर्वसहेत्यादि प्रकृतिगतलक्षणम् ॥

अत्रान्तरे त्यजेदष्टौ भाष्यादीनि विशेषतः ।
उच्चैर्भाष्याच्छिरोरोगतिमिरोरःस्वरव्यथाः ॥
रक्तनिष्ठीवतमकज्वराद्यास्तत्र साधनम् ।
अभ्यङ्गस्वेदनस्याधोभक्तस्नेहोपसेवनम् ॥
मौनं विधिर्वातहरो यथास्वं च विकारजित् ।

अत्र च वस्तिप्रयोगे भाष्यादीन्यष्टौ विशेषतो वर्जयेत् । उच्चैर्भाष्यम् । अत्यास्या ।

यानयानम् । अतिचङ्क्रमणम् । अजीर्णभोजनम् । अहितान्नम् । दिवास्वप्नः । व्यायाम इत्यष्टौ । उच्चैर्भाष्याच्छिरोरोगादयो वातकोपजाः । तत्र चिकित्साभ्यङ्गादिकम् । अधोभक्तं भोजनान्ते स्नेहोपसेवनम् । मौनं वाग्यमः । यथास्वं रोगेषु विकारजिद्विधिश्च ॥

अत्यास्यायानयानाभ्यां सन्धिमूर्धत्रिकादिरुक् ।
अतिचङ्क्रमणात् पादजङ्घोरुसदनादयः ।
तेषां वातहरं सर्वं स्नेहस्वेदादिशस्यते ॥
अजीर्णभोजनादामविषच्छर्दिज्वरादयः ।
तत्र मात्राशितीयोक्तो विधेयो विधिरामहा ॥
अहितान्नाद्यथादोषं रोगाः स्युर्भेषजानि च ।

अत्यास्यातो यानयानाच्च सन्ध्यादिरुक् । अतिचङ्क्रमणात् पादरुगादयः । तेषां सन्धिरुगादीनां स्नेहस्वेदादि वातहरं शस्यते । अजीर्णभोजनादामादयः । तत्रेत्यादि सुबोधम् । अपथ्यभोजनादपथ्यानुगुण्येन दोषकोपाद्रोगोद्भवः । तेषु च भेषजानि यथादोषमेव ॥

हलीमकादयः प्रोक्ता दिवास्वप्नात् पुरा गदाः
विदध्यात् कफजित्तेषु धूमरूक्षान्नलङ्घनम् ॥

दिवास्वप्नाद्धलीमकादयो गदाः पुरा विरुद्धान्नविज्ञानीये अहितनिद्रया ये प्रोक्ताः । तेषु हलीमकादिषु धूमादिकं कफजिद्विदध्यात् ॥

व्यवायाज्जीवितभ्रंशस्तैस्तैरस्यानिलामयैः ।
गुदोऽवलुप्यत इव भ्रमतीव च चेतना ॥
मेढ्रं धूमायति मनस्तमसीव प्रवेक्ष्यते ।
जीवनीयशृतक्षीरसर्पिषोरुपसेवनम् ॥
आहारो बृंहणस्तत्र वृष्यास्ते ते च वस्तयः ।

व्यवायादस्य वस्त्युपयोगिनस्तैस्तैरनिलामयैर्वातव्याधिभिर्नानाविधैर्जीवितभ्रंशः स्यात् । अवलुम्पनं छेदनम् । चेतना संवित् । मनश्चित्तम् । तत्र जीवनीयगणसिद्धस्य क्षीरस्य सर्पिषश्चोपसेवनम् । आहार इत्यादि सुबोधम् ॥

वेगरोधोर्ध्ववातत्वात् प्रागुक्ता ये सदातुराः ।
तेषां विबद्धे पवने सर्वदेहोपतापिनि ॥
फलवर्तिं पुरा दद्यादथ वस्तिं चलापहम् ।

प्राक्सूत्रस्थाने वमनविरेचनविधौ । स्त्रियो राजसमीपस्था वणिजश्च जयेत्सदा इत्युक्तास्तेषां वेगरोधेनोर्ध्ववातत्वात्सकलदेहोपतापिनि पवने विबद्ध इदमिदं कुर्यात् । आदौ फलवर्तिस्ततः प्रवृत्ते मले चलापहं वस्तिं दद्यात् । किमित्याह ॥

निकुम्भकुम्भाग्न्युरुपूगधावनी-
पुनर्नवं दारु महच्च पञ्चकम् ।
फलं च सूत्रे कथितं समस्तु तत्
घृतं सतैलं लवणानि पञ्च च ॥
निरूहितं धन्वरसेन भोजये-
न्निकुम्भतैलेन ततोऽनुवासयेत् ।

निकुम्भादिकाथो मस्तुना समो घृतादिकं च । अनेन निरूहितं धन्वमांसरसेन च भोजयेत् । भुक्ते च दन्तीतैलेनानुवासयेत् ॥

बलां सरास्नां फलबिल्वचित्रकान्
द्विपञ्चमूलं कृतमालकात् फलम् ॥
यवान् कुलत्थांश्च पचेज्जले रसः
समुस्तपाठेन्द्रयवैश्च कल्कवान् ।
सतैलसर्पिर्गुळसैन्धवो हितः
सदातुराणां बलपुष्टिवर्णदः ॥
तथानुवास्यं मधुकेन साधितं
फलेन बिल्वेन शताह्वयाथवा ।
सजीवनीयस्तु रसोऽनुवासने
निरूहणे चालवणः शिशोर्हितः ॥

बलादिकं जले पचेत् । रसो मुस्तादिकल्कवांस्तैलादियुक्तश्च सदातुराणां क्षीराजसमीपस्थवणिजां बलादिप्रदो बस्तिः स्यात् । मधुकाद्यन्यतमसाधितं तैलं तेषामनुवास्यमनुवासने साधु । शिशोर्निरूहेऽनुवासने च सजीवनीयद्रव्यो मांसरसो हितः । उभयत्राप्यलवणः । प्रसङ्गेनाह ॥

निरूहबस्तेर्नैवान्यत् पथ्यं स्थविरबालयोः ।
बलाङ्गवर्धनं शीघ्रमादतो योजयेदतः ॥

इति कल्पस्थाने सप्तमोऽध्यायः ॥

बालस्य स्थविरस्य च निरूहबस्तेरन्यत् किञ्चिन्नैव पथ्यम् । अतस्तमेव बलवर्धनमङ्गवर्धनं चादृतः सन् शीघ्रं योजयेत् ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां कल्पस्थाने सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ।

कल्पनाप्रसङ्गसामान्येन भेषजानां कल्पनां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो भेषजकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥

जाङ्गले साधारणे वा देशे यथाकालं शिशिरातपपवनसलिलसेविते समे शुचौ प्रदक्षिणोदके श्मशानचैत्यदेवयजनागारसभाश्वभ्रारामवल्मीकोषरविरहिते कुशरोहिषास्तीर्णे स्निग्धकृष्णसुवर्णमधुरसुरभिमृत्तिके मृदावफालकृष्टेनुपहतेन्यैर्बलवत्तरैर्द्रुमैर्भेषजानि प्रशस्यन्त इति सामान्यतो भूमिपरीक्षा ॥

प्रथममेव जाङ्गल इत्यादिना भेषजानां सामान्येन भूमिपरीक्षा आकरनिर्णयः । जाङ्गलादिके जातानि भेषजानि प्रशस्यन्ते । यथाकालं कालानतिक्रमेण शीतातपादिसेविते देशे श्मशानादिविरहिते । चैत्यं प्रसिद्धम् । ग्रामाद्बहिर्वा महान् वृक्षश्चैत्यः । देवागारं यजनागारश्च । सभा राजनिवेशः । श्वभ्रमवटः । आरामं क्रीडावनिः । वल्मीकं पिपीलिकास्थाणुः । ऊषरं दग्धमृत्प्रदेशः । रोहिषः कुशविशेषः । स्निग्धादि मृत्तिकाविशेषणम् । फालः शस्त्रमयो लाङ्गलाग्रः ॥

अश्मवतीत्यादिना पार्थिवादिविशेषेण भूमिपरीक्षा ॥

विशेषतस्त्वश्मवतीस्थिरा गुर्वी श्यामा कृष्णा स्थूलतृणवृक्षसस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतलासन्नोदकास्निग्धतृणसस्यकोमलवृक्षप्राया शुक्लाचाम्बुगुणभूयिष्ठा । नानावर्णलघ्वश्मपुष्पवती प्रविरळपाण्डुवृक्षप्ररोहाग्निगुणभूयिष्ठा । रूक्षा रासभभस्मवर्णारूक्षतनुकोटरवृक्षप्रायाल्परसप्ररोहानिलगुणभूयिष्ठा । मृद्वीसमा श्वभ्रवत्यव्यक्तरसजला महापर्वतवृक्षा श्यामा चाकाशगुणभूयिष्ठा । तत्राम्बुपृथिवीगुणभूयिष्ठासु भूमिषु जातानि विरेचनानि बृंहणानि च शस्यन्ते । अनलानिलाकाशगुणभूयिष्ठासु वमनानि ; सर्वगुणयुक्तासूभयतोभागानि । आकाशगुणभूयिष्ठासु शमनानि । एवं बलवत्तमानि भवन्ति ॥

साश्मत्वादिगुणा भूमिः स्वगुणभूयिष्ठा पार्थिवगुणाधिकेत्यर्थः । तत्र हि यज्जायते तत् पार्थिवगुणाधिकं भवति । एवं सर्वत्र । स्निग्धादिगुणाम्बुभूयिष्ठा । नानावर्णादिगुणाग्निगुणभूयिष्ठा । रूक्षादिकानिलभूयिष्ठा । रासभो गर्दभः । कोटरो वृक्षान्तर्गर्तप्रायम् । अल्परसः प्ररोहे यस्याः । श्वभ्रवत्यादिका आकाशभूयिष्ठा । तत्राम्बित्यादि सुबोधम् । एवमित्युक्तेन प्रकारेण भूमिविशेषैः ॥

तत्रेत्यादिना भेषजस्वरूपम् ।

तत्र यानि कालजान्युपगतसंपूर्णप्रमाणरसवीर्यगन्धानि कालातपाग्निसलिलपवनशस्त्रजन्तुभिरनुपहतगन्धवर्णरसस्पर्शप्रभावान्यवगाढमूलान्युदीच्यां दिशि स्थितानि । तेषां शाखापलाशमचिरप्ररूढं वर्षावसन्तयोर्ग्राह्यम् । ग्रीष्मे मूलानि शिशिरे वा शीर्णप्ररूढपर्णानाम् । शरदि त्वक्कन्दक्षीराणि । हेमन्ते साराणि । यथर्तु पुष्पफलम् ॥

यानि स्वे काले जातानि । उपगतानि संपूर्णानि प्रमाणादीनि येषाम् । कालादिभिरनुपहतानि गन्धादीनि येषाम् । अवगाढं दूरप्रविष्टं मूलं येषाम् । क्षेत्र उदीच्यां दिशि स्थितानि । तेषां कालजादिगुणसंपन्नानां शाखादिकमुपयोगि नवं वर्षासु वसन्ते वा ग्राह्यम् । ग्रीष्मे शिशिरे वा मूलानि तानि तु पूर्वेषु पर्णेषु शीर्णेषु नवेषु वा प्ररूढेषु । त्वगादीनि शरदि । साराणि हेमन्ते । पुष्पफलन्तु यथास्वमृतुषु ॥

अन्ये पुनराहुः सौम्यान्यौषधानि सौम्येष्वृतुष्वाग्नेयान्याग्नेयेषु । एवमव्यापन्नान्यापूर्णतररसवीर्याणि च भवन्ति ॥

अन्य इत्यादि सुबोधम् । मधुरतिक्तकषायाणि सौम्यानि । शेषाण्याग्नेयानि । वर्षाशरद्धेमन्ताः सौम्याः । शेषास्त्रय आग्नेयाः ॥

अथ मङ्गलाचारः कल्याणवृत्तः शुचिः शुक्लवासाः संपूज्य च देवतामश्विनौ गोब्राह्मणांश्च कृतोपवासः प्राङ्मुख उदङ्मुखो वा गृह्णीयात् । गृहीत्वा चानुरूपगुणवद्भाजनसंस्थान्यगारेषु पूर्वोत्तरद्वारेषु निवातप्रवातै-

